भक्ति तो रागरूप है और राग से मुक्ति कैसे सम्भव है, तथापि 'यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते' इत्यादि श्रुतिवचनों से तथा 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इत्यादि भगवद्वचन से भक्ति ब्रह्मावाप्ति में मणिमन्त्रादिन्यायेन हेतु है।

गङ्गालहरी के इक्यावनवें श्लोक में स्वामी नारायणतीर्थ ने कृपा से मुक्ति रूप फल का निरूपण करते हुए कहा कि विभिन्न साधनों से होने वाले सिद्धों मे कृपासिद्ध श्रेष्ठ होता है। इस श्लोक की व्याख्या में स्वामी नारायण तीर्थ ने कृपा से मुक्तिरूप फल का निरूपण करते हुए कहा कि 'मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' इत्यादि वचनों से भगवत्प्रसाद से ज्ञान द्वारा कैवल्य प्राप्ति सम्भव है। जैसे श्रवण, मनन तथा निदिध्यासन ज्ञान के प्रति कारण हैं वैसे ही भगवद्भजन तथा भगवत्कृपा भी है।

गङ्गालहरी के बावनवें श्लोक में स्वामी नारायणतीर्थ ने गङ्गा जी के माहात्म्य का निरूपण करते हुए कहा – हे सुरधुनि! तुम्हारी कृपा से लोगों का मोक्ष होता है इस बात को जानकर ही तुम्हारे तट में रहने वाले लोग तुम्हारी भक्ति में रत हैं। हे माँ! मैं भी इसीलिए क्लेशकारक यज्ञादि तप को तथा कठिन ज्ञान को छोड़कर आपके तट का वासी होकर आपके स्तोत्र में लगा हूँ। इस श्लोक की व्याख्या में स्वामी नारायणतीर्थ ने गङ्गा जी के माहात्म्य में कुछ अन्य पद्य भी उद्धृत किए हैं।

गङ्गालहरी के तिरपनवें श्लोक में स्वामी नारायणतीर्थ ने इस गङ्गालहरी को शाङ्कर अद्वैत सिद्धान्त की प्रतिपादिका बताते हुए कहा कि यह गङ्गालहरी श्रीशङ्कराचार्य जी के भाष्यरूपी समुद्र में मिली हुई गङ्गा की स्तुति रूपा पवित्र तरङ्ग है, जिसके मनन करने व जिसमें अवगाहन करने वाले मनुष्य मात्सर्य, मद आदि से दूर होकर श्रद्धा एवं भक्ति से परिपूर्ण होकर सच्चिद् ब्रह्म को प्राप्त करते हैं। इस श्लोक में इस गङ्गालहरी को शाङ्कर-भाष्य रूपी समुद्र में मिली हुई तरङ्ग कहा गया है। इसके अध्ययन से भी यह स्पष्ट होता है कि इसमें शाङ्करभाष्य में प्रतिपादित सिद्धान्तों को ही दर्शाया गया है। इस श्लोक की व्याख्या में मूल के भावार्थ को ही स्पष्ट किया गया है।

गङ्गालहरी के चौवनवें श्लोक में स्वामी नारायणतीर्थ ने अपनी गुरुपरम्परा का उल्लेख करते हुए गङ्गालहरी के, सभी के लिए कल्याणकरिणी होने की कामना की है। इसकी व्याख्या में उन्होंने मूल के भावार्थ को ही स्पष्ट किया है।

संक्षेप में इस रचना के प्रत्येक श्लोक के प्रतिपाद्य को इस प्रकार संगृहीत किया जा सकता है- इस ग्रन्थ के पहले श्लोक में ब्रह्माद्वैत, दूसरे श्लोक में निर्विशेषप्रकरण, तीसरे श्लोक में परिणामनिरासप्रकरण, चौथे श्लोक में सर्वज्ञताप्रकरण, पाँचवे श्लोक में जगन्निमित्तोपादानताप्रकरण, छठें श्लोक में प्रधानवादनिरास प्रकरण, सातवें श्लोक में परमाणुवादनिरासप्रकरण, आठवें श्लोक में कार्यान्वयनिरासप्रकरण, नवें श्लोक मे व्युत्पत्तिप्रकरण, दसवें श्लोक में प्रवर्तकनिरूपणप्रकरण, ग्यारहवें श्लोक में अन्विताभिधानप्रकरण, बारहवें श्लोक में ब्रह्म में क्रियानपेक्षताप्रामाण्यप्रकरण, तेरहवें श्लोक में लौकिकाखण्डवाक्यार्थनिरूपण, चौदहवें श्लोक में वैदिकाखण्डवाक्यार्थनिरूपण, पन्द्रहवें श्लोक में शब्दप्रवृत्तिनिरूपण, सोलहवें श्लोक में मन्त्रार्थवादप्रामाण्यनिरूपण, सत्रहवें श्लोक में वेदों का स्वतः प्रामाण्यनिरूपण, अठारहवें श्लोक में तत्त्वावेदकप्रामाण्यनिरूपण, उन्नीसवें श्लोक में वेदों का अपौरुषेयत्वनिरूपण, बीसवें श्लोक में ब्रह्मपारतन्त्र्य, इक्कीसवें श्लोक में प्रपञ्चमिथ्यात्वप्रकरण, बाइसवें श्लोक मे अनिर्वाच्यख्यातिप्रकरण, तेइसवें श्लोक में स्वरूपभेदनिरासप्रकरण, चौबीसवें श्लोक में भेद निरासप्रकरण, पच्चीसवें श्लोक में समन्वयप्रकरण, छब्बीसवें श्लोक में ऐक्यात्मनिरूपण, सत्ताइसवें श्लोक में स्वप्रकाशत्वप्रकरण, अट्ठाइसवें श्लोक में साक्षिस्वरूपनिरूपण, उन्तीसवें श्लोक में सर्वगतप्रकरण, तीसवें श्लोक में सुखस्वरूपता, इकतीसवें श्लोक में कर्तृत्वादिबन्धमिथ्यात्वप्रकरण, बत्तीसवें श्लोक में जीवब्रह्मैकत्वप्रकरण, तैंतीसवें श्लोक में आभासवाद, अवच्छेदवाद, दृष्टिसृष्टिवाद का निरूपण, चौंतीसवें श्लोक में अज्ञान का भावत्वनिरूपण, पैंतीसवें श्लोक में अभावनिरूपण, छत्तीसवें श्लोक में सत्कार्यवादनिरूपण सैंतीसवें श्लोक में देहात्मवादनिरासप्रकरण, अड़तीसवें श्लोक में क्षणभङ्गनिरासप्रकरण, उनतालीसवें श्लोक में विज्ञानवादनिरासप्रकरण, चालीसवें श्लोक में ब्रह्माश्रयाज्ञाननिरूपण, एकतालिसवें श्लोक में अज्ञाननिवृत्तिनिरूपण, बयालिसवें श्लोक में

ज्ञानकर्मसमुच्चयनिराकरण, तेंतालिसवें श्लोक में ज्ञानाधिकारनिरूपण, चौवालीसवें श्लोक में ज्ञानविधिनिराकरण, पैंतालिसवें श्लोक में श्रवणादिसाधन निरूपण, छियालिसवें श्लोक में जीवन्मुक्तिनिरूपणप्रकरण, सैंतालिसवें श्लोक में विदेहमुक्तिप्रकरण, अड़तालिसवें श्लोक में अहंग्रहोपासनफल, उनचासवें श्लोक में प्रतीकोपासनाफलनिरूपण, पचासवें श्लोक में भक्ति से फलनिरूपण, इक्यावनवें श्लोक में कृपा से फलनिरूपण, बावनवें श्लोक में गङ्गालहरी ग्रन्थ का माहात्म्य तथा चौवनवें श्लोक में ग्रन्थ का उपसंहार वर्णित है। चौवनवें अर्थात् अन्तिम श्लोक में पहले तो नारायणतीर्थ स्वामी ने स्वगुरूपरम्परा का उल्लेख किया है तत्पश्चात् गङ्गा की स्तुति के द्वारा सभी के कल्याण की कामना करते हुए ग्रन्थ का उपसंहार किया है।

## 3. स्वामी नारायणतीर्थ की कृतियाँ

विभिन्न स्त्रोतों से स्वामी नाराणतीर्थ की विभिन्न कृतियों का उल्लेख प्राप्त होता है। कैटलागस् कैटलागोरम् सूची ग्रन्थ के अनुसार इन्होंने 11 ग्रन्थों की रचना की थी – 1.तत्त्वचन्द्र (सांख्यतत्त्वकौमुदी की व्याख्या), 2. न्यायकुसुमाञ्जलि-कारिकाव्याख्या 3. भक्तिचन्द्रिका (शाण्डिल्य सूत्रव्याख्या) 4. भक्त्यधिकरणमाला 5. योगचन्द्रिका 6.योगसूत्रवृत्ति 7. वेदस्तुतिटीका 8. वेदान्तविभावनाटीका 9. सांख्यचन्द्र 10.सिद्धान्तबिन्दुव्याख्या 11. भाट्टभाषा-प्रकाश) इनसाइक्लोपीडिया आव् इन्डियन फिलॉसफी ने इनके सात दार्शनिकग्रन्थों का उल्लेख किया है – 1. बालबोधिनी (शंकराचार्य के आत्मबोध के विषय में) 2. भाट्टभाषाप्रकाश 3. चन्द्रिका (ईश्वरकृष्ण की सांख्यकारिका पर आधरित) 4. लघुव्याख्या (मधुसूदन सरस्वती के सिद्धान्तबिन्दु पर आश्रित) 5. न्याय चन्द्रिका (विश्वनाथ की सिद्धान्तमुक्तावली पर आधरित) 6. तत्त्वचन्द्र (वाचस्पतिमिश्र विरचित सांख्यतत्त्वकौमुदी की व्याख्या) 7. चन्द्रिका अथवा वृत्ति (पतञ्जलि के योगसूत्र पर आधारित)।

इन दोनों ग्रन्थों में स्वामी नारायण तीर्थ की रचनाओं के रूप में उल्लिखित ग्रन्थों से अतिरिक्त भी इनकी रचनाएँ हैं जिनमें कृष्णलीलातरङ्गिणी, अद्वैतवादावली, गङ्गालहरी, गङ्गालहरीव्याख्या प्रमुख हैं।

## 4. स्वामी नारायणतीर्थ : संक्षिप्त परिचय

गङ्गालहरी के प्रणेता स्वामी नारायणतीर्थ का जन्म सत्रहवीं शताब्दी के उत्तरार्द्ध में आन्ध्रप्रदेश में हुआ था। इनके बाल्यकाल का नाम गोविन्द तथा इनके पिता का नाम नीलकण्ठसूरि था। कालान्तर में इन्होंने संन्यास ग्रहण कर लिया था। अत: ये स्वामी नारायणतीर्थ के नाम से प्रसिद्ध हुए। ये न्याय, मीमांसा, अद्वैतवेदान्त, सांख्ययोग, भक्तिशास्त्र, काव्य एवं संगीत के मर्मज्ञ विद्वान् थे, यह बात इनकी तत्तद्विषयक रचनाओं से ज्ञात होती है। (द्रष्टव्य विज्ञापयितुर्विज्ञापना, भाट्टभाषाप्रकाशः, राष्ट्रियसंस्कृतविद्यापीठम्, 2005, तिरुपतिः।) भाट्टभाषा प्रकाश के पूर्णता पर कहे गए वाक्य एवं गङ्गालहरी के अन्तिम श्लोक के अनुसार इनके विद्यागुरुओं में शिवरामतीर्थ तथा वासुदेव यति प्रमुख थे। गङ्गालहरी के बावनवें श्लोक के अनुशीलन से ऐसा प्रतीत होता है कि स्वामी नारायणतीर्थ ने जीवन की चरमावस्था में इस कृति की रचना की थी।

## 5. गङ्गालहरी व्याख्या सम्पादन के सन्दर्भ में

जैसा कि पूर्व में उल्लेख किया जा चुका है कि नारायणतीर्थ की गङ्गालहरी का प्रथम प्रकाशन राष्ट्रियसंस्कृतसंस्थान, गङ्गानाथ झा परिसर की शोध पत्रिका Journal of The Ganga Natha Jha Kendriya Sanskrit Vidyapeetha, LXIII(1-4) 2007, Allahabad 2009 में किया जा चुका है। मूल भाग का उक्त सम्पादन तीन हस्तलेखों के आधार पर किया गया था जिनका विवरण इस प्रकार है –

क–मातृका (Acc. No. 27687) राष्ट्रिसंस्कृतसंस्थानस्य गङ्गानाथ झा परिसर में सुरक्षित है।

ख–मातृका (Acc. No.45687) श्री रघुनाथ मन्दिर पुस्तकालय, जम्मू में सुरक्षित है।

ग–मातृका (Acc. No.4753) भी श्री रघुनाथ मन्दिर पुस्कालय में सुरक्षित है।

सौभाग्य से मूलकार के द्वारा की गयी गङ्गालहरी व्याख्या का भी एक हस्तलेख श्री रघुनाथ मन्दिर पुस्तकालय में सुरक्षित है, जो उपर्युक्त हस्तलेख में (ग) हस्तलेख के रूप में निर्दिष्ट है। इस हस्तलेख के आधार पर गङ्गालहरी व्याख्या का प्रकृत सम्पादन किया गया है। यह ग्रन्थ दार्शनिक ग्रन्थ होने के साथ एक काव्य ग्रन्थ भी है और वह भी गङ्गा-स्तुतिपरक, अतः यह जनसामान्य की जिज्ञासा एवं अध्ययन का विषय हो सकता है इसी बात को ध्यान में रखकर इस सम्पादन में मूल श्लोकों के साथ पदच्छेद, अन्वय तथा भावार्थ को भी सम्पादक के द्वारा समायोजित कर दिया गया है।

ग्रन्थ के अन्त में 'श्लोकपाठभेद टिप्पणी' में मूल श्लोकों के पाठभेद को (जो तीन हस्तलेखों के आधार पर प्राप्त हुए हैं) दर्शाया गया है। परिशिष्ट 1 में वर्णानुक्रम से श्लोकों की सूची उनमें प्रतिपादित विषय के साथ दी गयी है। परिशिष्ट 2 में श्लोकों के प्रत्येक पाद की वर्णानुक्रमणी है तथा परिशिष्ट 3 में गङ्गालहरी व्याख्या में आए महत्त्वपूर्ण पदों को वर्णानुक्रम से दिया गया है।

## 6. कृतज्ञता ज्ञापन

इस ग्रन्थ के सम्पादन में सर्वप्रथम जम्मू के धर्मार्थ ट्रस्ट के अधिकारियों तथा श्री रघुनाथ मन्दिर पुस्तकालय के पुस्तकालयाध्यक्ष श्री धनीराम शास्त्री जी के प्रति अपनी कृतज्ञता व्यक्त करता हूँ, जिनकी अनुमति से इस हस्तलेख की छायाप्रति प्राप्त हुई, जिसके परिणामस्वरूप यह ग्रन्थ सम्पादित किया जा सका।

राष्ट्रिय संस्कृत संस्कृत संस्थान के कुलपति आदरणीय प्रो. राधावल्लभ त्रिपाठी जी की सदिच्छा इस ग्रन्थ के प्रकाशन में मुख्य हेतु है, अतः मैं उनके प्रति अपनी हार्दिक कृतज्ञता व्यक्त करता हूँ। गङ्गानाथ झा परिसर के सम्मान्य प्राचार्य प्रो. सर्वनारायण झा जी का सत्प्रयत्न इस कृति के प्रकाशन में महत्त्वपूर्ण कारण है। अतः आपके प्रति अपनी हार्दिक कृतज्ञता व्यक्त करता हूँ।

इस ग्रन्थ की सम्पादित प्रतिकृति की मुद्रणयोग्य लिखित प्रतिकृति तैयार करने में डॉ. सूर्यप्रकाश शुक्ल के सहयोग के लिए उन्हें हार्दिक साधुवाद एवं शुभकामनाएँ देता हूँ। संगणकीय प्रतिकृति तैयार करने में उल्लेखनीय योगदान के

लिए श्री ब्रह्मानन्द मिश्र एवं सहयोगी आशीष कुमार द्विवेदी को अपनी हार्दिक शुभकामनाएँ देता हूँ।

गङ्गानाथ झा परिसर के शोध विभाग, संग्रहालय तथा पुस्तकालय के सदस्यों के प्रति अपनी कृतज्ञता व्यक्त करता हूँ, जिनका समय समय पर मुझे वाञ्छित सहयोग प्राप्त होता रहता है। इस ग्रन्थ के प्रकाशन में जिनका भी साक्षात् या परोक्ष अवदान रहा है, उन सभी के प्रति हार्दिक कृतज्ञता का अनुभव करता हूँ।

## 6. निवेदन

गङ्गालहरी व्याख्या का प्रकृत सम्पादन एक हस्तलेख के आधार पर किया गया है। किसी भी शास्त्रीय ग्रन्थ के एक मात्र हस्तलेख के आधार पर सम्पादन में आने वाली कठिनाइयों से विद्वज्जन सुपरिचित ही हैं। हस्तलेख में जगह जगह पाठों की अस्पष्टता एवं त्रुटिपूर्णता आदि के कारण प्रकृत सम्पादन में कुछ त्रुटियाँ भी सम्भावित हैं। आशा है विद्वज्जन इनके संशोधन के लिए सम्पादक को अपना मार्गदर्शन प्रदान कर अनुगृहीत करेंगे। इसी निवेदन के साथ इस ग्रन्थ की भूमिका को अर्धविराम देता हूँ।

ललित कुमार त्रिपाठी
सम्पादक



# अनुक्रमणी

नारायणतीर्थकृता

# गङ्गालहरी

नारायणतीर्थकृतस्वोपज्ञ-

# गङ्गालहरीव्याख्या-सहिता

नारायणतीर्थकृता

# गङ्गालहरी

नारायणतीर्थकृतस्वोपज्ञ-

# गङ्गालहरीव्याख्या

-सहिता

श्रीगुरुगणपतिभ्यो नमः[1]

वेणीमाधवाय नमः[2]

गङ्गायै नमः[3]

## अथ अद्वैतप्रकरणम्

सदेका निर्द्धूतद्वयनिखिलमोहाऽमृतसुखा
समस्तव्यस्तात्मस्थिरचरविकल्पैकनिलया ।
निरीहा निर्लेपा निरवधि परब्रह्म सुभगा[4]
त्वमेव त्वत्कीर्त्यै सुरधुनि मनो मे स्पृहयति।।१।।

पदच्छेदः - सद्-एका निर्द्धूत-द्वय-निखिल-मोहा अमृत-सुखा समस्त-व्यस्त-आत्म-स्थिर-चर-विकल्प-एक-निलया। निरीहा निर्लेपा निरवधि परब्रह्म सुभगा त्वम् एव त्वत्-कीर्त्यै सुरधुनि! मनः मे स्पृहयति।।

**अन्वयः** - *(भो) सुरधुनि! त्वत्कीर्त्यै मे मनः स्पृहयति। (यतः) सदेका निर्द्धूतद्वयनिखिलमोहा अमृतसुखा समस्तव्यस्तात्म-स्थिरचरविकल्पैकनिलया निरीहा निर्लेपा निरवधि परब्रह्म सुभगा त्वमेव।*

**भावार्थ** – हे सुरधुनि! तुम्हारा कीर्तिगान करने के लिए मेरा मन लालायित हो रहा है, क्योंकि तुम सत् रूपा हो तथा एक हो। द्वैत-भाव को तथा समस्त मोह को तुम्हारे द्वारा निरस्त कर दिया गया है। तुम ही मोक्षसुखरूपा हो। तुम ही समष्टि, व्यष्टि, स्थिर तथा चररूपी सभी विकल्पों का एकमात्र अधिष्ठान हो। तुम सभी प्रकार के व्यापार से विरत हो अर्थात् निर्व्यापार हो। तुम सभी प्रकार के सङ्ग से रहित हो। तुम असीम ब्रह्मस्वरूपा तथा उत्तम माहात्म्यवाली हो।

**ग.ल.व्याख्या- श्री गणेशाय नमः।।**

**श्री गुरुभ्यो नमः।।**

श्रीरामगोविन्दसुतीर्थपाद-
कृपाविशेषादुपलभ्य बोधम्।
श्रीवासुदेवादधिगत्य सर्व-
शास्त्राणि वक्तुं किमपि स्पृहानः।।१।।

**इह खलु संसारपङ्कमग्नानां प्राणिनां समुद्धाराय गङ्गास्तुति-प्रसङ्गेन परं ब्रह्माद्वैतं निर्द्धारयितुमाह सदेकेति। भो सुरधुनि! त्वत्कीर्त्यै मे मनः स्पृहयति। यतः सदैकेत्यादिस्वरूपा त्वमेव। सती चासौ एका च सदेका। सती कालत्रयाबाध्या। एका सजातीयद्वितीयरहिता। तथा निर्द्धूतौ द्वयनिखिलमोहौ यया। द्वयं कार्यं मोहो माया। अविद्याभेदेन द्विधा प्रकृतिः। तथाऽमृतसुखा मोक्षसुखरूपा। तथा समस्तव्यस्त। समष्टिव्यष्टिरूप आत्मा स्वरूपं यस्य ईदृशः, स्थिरचर-विकल्पः। स्थिरचरौ आत्मानौ यस्य स स्थिरचरात्मकस्तादृशो विकल्पः मध्यमपदलोपी समासः। तस्य एका चासौ निलया च**

मुख्याधिष्ठानरूपा। निरीहा निर्व्यापारनिर्लेपा असङ्गा। निरवधि परब्रह्मैव। सुष्ठु भगो माहात्म्यं यस्याः। 'भगं श्रीकाममाहात्म्य-वीर्ययत्नार्ककीर्तिषु' इत्यमरः।

'सदेव सोम्येदमग्र आसीत्', 'एकमेवाद्वितीयम्', 'सलिल एको द्रष्टा अद्वैतः', 'सत्यं ज्ञानमनन्तं' 'विज्ञानमानन्दं ब्रह्म', 'एतद्वै तदक्षरम्', 'न तस्य कार्यं कारणं च विद्यते', 'अविकल्पो ह्ययमात्मा' इत्यादिप्रमाणात् सदैकेत्यादिस्वरूपं यद् ब्रह्म तदभिन्नैव गङ्गा।

सर्वेश्वरस्य या शान्ता मूर्तिरिषा सनातनी।
त्रैलोक्यपावनार्थाय दयया धरणीं गता।।

इत्यादिवाक्यैरिति भावः।

न च द्वैतप्रतिभासस्य भ्रान्तित्वात्, न च बाधं विना द्वैत-प्रतिभासस्य कथं भ्रमत्वम्, सर्वेषां प्रमाणानामज्ञातज्ञापकत्वेनैव प्रामाण्याज्जडे च प्रमाणप्रयोजनयोरभावेनाज्ञानानभ्युपगमात्। तत्र प्रमाणव्यापाराभावादज्ञातसन्मात्रविषयत्वादिति विवक्षितविवेकेन द्वैतस्य प्रमाणायोग्यत्वादित्यधिकमाकरे।।

इत्यद्वैतप्रकरणम्।।१।।

## अथ निर्विशेषप्रकरणम्

अशेषैर्दोषैस्त्वं जननि गुणजातैश्च रहिता-
ऽविशेषाऽसामान्या परममहिमानं गतवती।
समस्ताद्यैर्हीना निखिलजनसन्तापहरिणी
स्तुता ध्याता ख्याता वितरसि पुमर्थान् सुरधुनि।।२।।

**पदच्छेद:** – अशेषैः दोषैः त्वम् जननि! गुण-जातैः च रहिता अविशेषा असामान्या परम-महिमानम् गतवती। समस्त-आद्यैः हीना निखिल-जन-सन्ताप-हरिणी स्तुता ध्याता ख्याता वितरसि पुमर्थान् सुरधुनि।।

**अन्वयः-** *हे सुरधुनि! त्वं स्तुता ध्याता ख्याता (सती) पुमर्थान् वितरसि। (त्वम्) अशेषैः दोषैः गुणजातैः च रहिता अविशेषा असामान्या परममहिमानं गतवती (असि)। (त्वं) समस्ताद्यैः हीना निखिलजनसन्तापहरिणी (असि)।*

**भावार्थ** – हे सुरधुनि! तुम स्तुत होकर, ध्यात होकर तथा कीर्तित होकर सभी पुरुषार्थों को प्रदान करती हो। ब्रह्मस्वरूपा गङ्गे! तुम सभी रागादि गुण एवं दोषों से रहित हो। तुम सामान्य एवं विशेष सभी धर्मों से भी रहित हो। तुम अद्वितीयलक्षण अखण्ड आनन्द रूपी माहात्म्य को धारण करती हो। तुम रागादि सभी के मूल कारणों से भी रहित हो। इसीलिए तुम सभी के सन्ताप को हरने वाली हो।

**ग.ल.व्याख्या-** अशेषैरिति। भो सुरधुनि! त्वं स्तुता ध्याता ख्याता सती पुमर्थान् वितरसीत्यन्वयः। कीदृशी त्वम्? अशेषैर्दोषै रागादिभिर्गुणैः प्रकृत्यादिभिर्विरहिता। अविशेषाऽसामान्या सामान्य-विशेषधर्मरहिता। परममहिमानम् अखण्डानन्दाद्वितीयलक्षणं माहात्म्यं प्राप्तवती। तथा अशेषाद्यैः रागादिमूलकारणैः समस्तपापैर्हीना। अत एव निखिलनिजजनानां स्वभक्तानां सन्तापस्य हरणीत्यर्थः।

अयं भावः–यद्यपि 'यः सर्वज्ञ' इत्यादिवाक्यात् कारणत्वादि-लिङ्गकानुमानाच्च ब्रह्म सविशेषं वक्तुं शक्यम्, तथापि 'एष सर्वेश्वरः', 'एषोऽन्तर्यामी', 'एष योनिः सर्वस्य', 'प्रभवाप्ययौ हि भूतानाम्', 'त्रयमप्येतत् स्वप्नं मायामात्रम्'। अथ 'चतुर्थश्चतुरात्मा तुरीयावसितत्वाद्', 'एकैकस्योताऽनुज्ञात्रनुज्ञाविकल्पैः' 'त्रयमत्रापि

सुषुप्तं स्वप्नं मायामात्रम्', 'एकधैवानुद्रष्टव्यं' 'नेह नानास्ति किञ्चन' 'चिदेकरसो ह्ययमात्मा' 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिवाक्यैर्ब्रह्मणोऽशेषविशेषप्रतिषेधाद् निर्विशेषमेव ब्रह्म।

न च 'यः सर्वज्ञ' इत्यादिवाक्यविरोधः, तेषां निर्गुणवाक्येन सगुणत्वनिषेधार्थमनुवादत्वात्। न च सगुणवाक्येन निर्गुणत्वमेव निषेद्धुं निर्गुणवाक्येनानूद्यत इति वाच्यम्, तात्पर्यपर्यालोचन-परिप्राप्तस्य निषेधार्थमनुवादायोगात्। तथा च तदभिन्ना गङ्गाऽपि तादृश्येवेति स्तुता ध्याता ख्याताऽखिलपुमर्थदानसमर्था ब्रह्मसम्पत्ति-रूपमोक्षस्य निर्विशेषब्रह्मप्रतिपत्तित एव सम्भवादिति भावः।

इति निर्विशेषप्रकरणम्।।२।।

## अथ परिणामनिरासप्रकरणम्

समुत्पत्तिं गङ्गे परिणतिपथं वृद्धिमपि वा<br>
विहीनत्वोच्छित्ती भवनमपि भावस्य विकृतीः।<br>
कदाचिन्नैव त्वं श्रयसि खलु सच्चित्सुखघना<br>
जनाज्ञानान्मातः प्रकटयसि पास्यत्सि सकलम्।।३।।

**पदच्छेदः** - समुत्पत्तिम् गङ्गे! परिणति-पथम् वृद्धिम् अपि वा विहीनत्व-उच्छित्ती भवनम् अपि भावस्य विकृतीः। कदाचिद् न एव त्वम् श्रयसि खलु सत्-चित्-सुख-घना जन-अज्ञानात् मातः प्रकटयसि पासि अत्सि सकलम्।।

**अन्वयः**- *(भो) गङ्गे! त्वं भावस्य विकृतीः समुत्पत्तिं भवनं वृद्धिं परिणतिपथं विहीनत्वोच्छित्ती कदाचिद् नैव श्रयसि। मातः! (त्वं) सच्चित्सुखघना जनाज्ञानात् सकलं प्रकटयसि पासि अत्सि।*

**भावार्थ** – हे गङ्गे ! तुम समुत्पत्त्यादि छः विकारों– जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यति का आश्रय नहीं लेती हो। अर्थात् ये छः विकार तुममें कभी नहीं होते। जो भी उत्पत्ति, रक्षण तथा विनाश तुम करती हो वह तो जीवों में आश्रित अज्ञान के कारण होते हैं। अर्थात् तुम सर्वथा सर्वदा परिणामरहित हो।

**ग.ल.व्याख्या- समुत्पत्तिमिति। भो गङ्गे! त्वं समुत्पत्त्यादि षड् विकारान् - जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यति इत्याद्युक्तान् नैव श्रयसि। यतः सच्चित्सुखघना यच्चोत्पत्त्यादि करोषि, तज्जनाज्ञानात् जीवाश्रिताज्ञानादित्यर्थः।**

**अयं भावः–यद्यपि ब्रह्म परिणामि, उपादानकारणत्वात्, मृदादिवत्। निरंशत्वेऽपि परिणामान्तरलाभस्तु-**

**शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।**
**यतोऽतो ब्रह्मणस्तास्तु सर्गाद्यभावशक्तयः।।**

**इत्यादिस्मृत्याऽनन्तशक्तिमत्त्वात्। परिणामित्वेऽपि नित्यत्वं तु परिणामनिर्वचनेन। तथा हि परिणामः कारणद्रव्यस्य संस्थान-विशेषो, न तु द्रव्यनाशेन द्रव्यान्तरोत्पत्तिरिति युक्तिभिः परिणामित्वं वक्तुं शक्यम्, तथापि 'निष्कलं निष्क्रियं शान्तं' 'न जायते म्रियते' इत्यादिश्रुतिभिर्ब्रह्मणोऽविक्रियत्वावगमात्, घटादिद्रष्टुर्घटादिभाव अस्यादृष्टपूर्वत्वेन वास्तवस्रष्टृत्वादुपपत्तेश्च, 'अथ रथान् रथयोगान् पथः सृजत' इत्युक्तस्वाप्नसृष्टिं प्रतीव विवर्त्तित्वमेव, न परिणामित्वम्।**

**न च तर्हि 'यदयमात्मा' इत्यादिसर्वात्मत्वश्रुतिविरोधः परिणामान्तरेण कारणस्य कार्यात्मताया दुर्वचत्वादिति शङ्क्यम्, तासां निष्प्रपञ्चब्रह्मप्रतिपत्तिप्रयोजनत्वात्, विधिमुखेन प्रतिपादयितुम-समर्थानां प्रपञ्चात्मतामारोप्य तत्साक्षित्वेन तत्प्रतिषेधेनाद्वितीय-**

**बोधनाद् इत्यास्तां विस्तरः।।३।।**

**इति परिणामनिरासप्रकरणम्।।३।।**

## अथ सर्वज्ञताप्रकरणम्

**सवित्राद्यास्त्वत्तः[8] सुरधुनि विभान्ति स्फुटतरं**
**न ते त्वां संभान्तीं[9] क्वचिदपि विभातुं हि विभवः।**
**अतस्त्वां सर्वज्ञां श्रयति जनता शर्मनिवहां**
**ददासि त्वं स्मृत्याप्यहह जनतायै[10] ध्रुवपदम्।।४।।**

**पदच्छेदः** – सवितृ–आद्याः त्वत्तः सुरधुनि! विभान्ति स्फुटतरम, न ते त्वाम् सम्भान्तीम् क्वचिद् अपि विभातुम् हि विभवः। अतः त्वाम् सर्वज्ञाम् श्रयति जनता शर्म–निवहाम्, ददासि त्वम् स्मृत्या अपि अहह जनतायै ध्रुवपदम्।।

**अन्वयः**– *भो सुरधुनि! सवित्राद्याः त्वत्तः स्फुटतरं विभान्ति। ते सम्भान्तीं त्वां क्वचिद् अपि विभातुं विभवः न (सन्ति)। अतः शर्मनिवहां सर्वज्ञां त्वां जनता श्रयति। अहह त्वं स्मृत्या अपि जनतायै ध्रुवपदं ददासि।*

**भावार्थ** – हे सुरधुनि! सूर्यादि तुमसे ही स्फुटरूप से प्रकाशित होते हैं। वे (सूर्यादि) स्वयं प्रकाशमान तुम्हें कभी भी प्रकाशित करने में समर्थ नहीं हैं। इसीलिए जनसमूह आनन्दसन्दोह सर्वज्ञरूपा तुम्हारा ही आश्रय प्राप्त करता है। अहो तुम स्मरणमात्र से ही लोगों को मोक्ष पद को प्रदान कर देती हो।

**ग.ल.व्याख्या**– **सवित्राद्या इति। भो सुरधुनि! सवित्राद्याः सूर्याद्याः त्वतो ब्रह्मरूपायाः विभान्ति। ते सूर्यादयः सम्भान्तीं प्रकाशमानां त्वां विभातुं भासयितुं णिजन्तर्भावेनार्थः न विभवः**

न समर्थाः। अतः शर्मनिवहाम् आनन्दसन्दोहां सर्वज्ञां त्वां जनतासमूहः श्रयति भजति। त्वं स्मृतापि जनसमूहाय स्थिरपदं मोक्षपदं ददासीत्यर्थः।

अयं भावः–यद्यपि ब्रह्म ज्ञानस्वरूपं ज्ञानवद्वेति विकल्पे किमपि न निरूपयितुं शक्यम्। तथाहि यदि ज्ञानस्वरूपं तदा सर्वज्ञत्वहानिः, ज्ञातृज्ञानोभयरूपानुपगमात्, यदि ज्ञानवत् तर्हि स्वरूपव्यतिरिक्तस्य जन्यत्वात् तज्ज्ञानस्य जन्यतयाऽस्मदादिवत् संसारित्वप्रसङ्गः, जन्य-ज्ञानाश्रयस्यैव संसारित्वात्, तथापि 'विज्ञानमानन्दं ब्रह्म' इति श्रुत्या ब्रह्मणो ज्ञानरूपत्वमेव' 'यः सर्वज्ञ' इति श्रुत्युक्तसर्वज्ञत्वं तु समस्तज्ञेयानुगतमायाप्रतिबिम्बितसोपाधिकस्फुरणाश्रयत्वादुपपद्यत इति वक्तुं शक्यम्। 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः। अत एव नास्मदादितुल्यता। तथा च मोक्षमपि स्वभक्तस्य स एव ददाति। 'ब्रह्म एतिर्दातुः परायणं तिष्ठमानस्य तद्विद' इति श्रुतेः। गङ्गा तु तादृशब्रह्माभिन्नत्वात् तादृशीति प्राग्वत्। एवमग्रेऽपि।

इति सर्वज्ञताप्रकरणम्।।४।।

## अथ जगन्निमित्तोपादनताप्रकरणम्

सृजस्येका नित्या जगदिदमवस्यत्सि गुणतः
स्थविष्ठा त्वं सूक्ष्मा यमयसि जगज्जातमनिशम्।
निमित्तोपादानं त्वमसि जगतामत्र भवतीं
भजामस्त्वां गङ्गेऽमृतमिह वितर्तुं त्रिपथगाम्।।५।।

**पदच्छेदः** - सृजसि एका नित्या जगद् इदम् अवसि अत्सि

गुणतः, स्थविष्ठा त्वम् सूक्ष्मा यमयसि जगज्जातम् अनिशम्। निमित्त–उपादानम् त्वम् असि जगताम् अत्र भवतीम्, भजामः त्वाम् गङ्गे अमृतम् इह वितर्तुम् त्रिपथगाम्।।

**अन्वयः–** *भो गङ्गे त्वम् एका नित्या इदं जगत् गुणतः सृजसि, अवसि, अत्सि। (त्वं) स्थविष्ठा सूक्ष्मा (च) जगज्जातम् अनिशं यमयसि। त्वं जगतां निमित्तोपादानम् असि। अत्रभवतीं त्वां त्रिपथगां इह अमृतं वितर्तुं भजामः।*

भावार्थ – हे गङ्गे ! तुम अद्वयरूपा तथा नित्य होती हुई सत्त्वादि गुणों से इस जगत् को उत्पन्न करती हो, इसका पालन करती हो तथा संहार भी करती हो। तुम्हीं अति स्थूलरूपा तथा तुम्हीं अति सूक्ष्मरूपा होती हुई इस समस्त संसार को सदा नियन्त्रित भी करती हो। तुम्हीं इस जगत् का निमित्त कारण भी हो तथा तुम्हीं इसका उपादान कारण भी हो। मोक्ष प्रदान करने के लिए पूजनीया त्रिपथगा हम सब तुम्हें भजते हैं।

**ग.ल.व्याख्या–** *सृजसीति।* **भो गङ्गे! त्वमेका गुणतः सत्त्वाद्यैः सृजसि रक्षसि संहरसि। किञ्चान्तर्यामिरूपा यमयसि प्रेरयसि। न केवलं त्वं निमित्तमात्रं किन्तूपादनमपीत्याह** *निमित्तोपादानमिति।* **अतस्त्वं। कार्यकारणात्मिकेत्याह** ***स्थविष्ठा सूक्ष्मेति।*** **अतो वयं मोक्षं दातुं त्रिपथगाम् अत्र भवतीं पूज्याम्। अत्रभवत् तत्रभवच्छब्दौ पूजार्थे निपातौ। भजाम इत्यन्वयः।**

**अयं भावः–यद्यपि कार्यद्रव्यस्य घटादेर्भिन्नोपादानाधिष्ठातृ-कत्वदर्शनाद् निमित्तत्वस्य समवायिकारणभेदगतगर्भतया समवाय्यवृत्तित्वाच्च ब्रह्म नोभयविधकारणम्, किं तु निमित्तमेव चेतनत्वादिति वक्तुं शक्यम्, तथापि 'आत्मा वा इदमेक एवाग्र आसीत्', 'तद्धेदं तर्ह्यव्याकृतमासीत् सच्च त्यच्चाभवत्', 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति', 'सकारणानि**

निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक' इत्यादिश्रुत्या जगतश्चेतनकारणसामानाधिकरण्यचेतनाधिष्ठितत्वयोरवगमात् स्यादेव ब्रह्माखिलजगन्निमित्तोपादानम्। उपादानत्वेऽपि निमित्तत्वस्य कारणताभेदगर्भतया समावेशादिति संक्षेपः।।

इति जगन्निमित्तोपादानताप्रकरणम्।।५।।

## अथ प्रधानवादिनिरासप्रकरणम्

**जगद् दृष्ट्वा मुग्धं सुखितमथदुःखान्वितमदः**
**प्रमन्यन्ते केचित् सगुणमचितं कारणमिह।**
**अहो त्वं तत्क्लृप्तैः सृजसि गुणजातैर्विरहिता**
**स्वयं पातुं हर्तुं प्रभवसि विहर्तुं सुरधुनि।।६।।**

**पदच्छेदः** – जगद् दृष्ट्वा मुग्धम् सुखितम् अथ दुःख-अन्वितम् अदः, प्रमन्यते केचित् सगुणम् अचितम् कारणम् इह। अहो त्वम् तत् - क्लृप्तैः सृजसि गुण-जातैः विरहिता, स्वयम् पातुम् हर्तुम् प्रभवसि विहर्तुम् सुरधुनि।।

**अन्वयः**- *भो सुरधुनि! केचित् मुग्धं सुखितम् अथ दुःखान्वितम् अदः जगद् दृष्ट्वा इह कारणम् सगुणम् अचितं प्रमन्यन्ते। अहो त्वं गुणजातैः विरहिता तत्कल्प्तैः (गुणैः) सृजसि। (अतः) स्वयं पातुं हर्तुं विहर्तुं च प्रभवसि।*

**भावार्थ** – हे सुरधुनि! कुछ दार्शनिक इस संसार को मोहग्रस्त, सुखी एवं दुःखी देखकर इसका कारण अचित् अर्थात् जड सगुण प्रकृति को मानते हैं, किन्तु तुम स्वयं सभी गुणों से रहित होती हुई उन्हीं सत्त्वादि गुणों से सृष्टि की रचना करती हो। अतः तुम स्वयं ही इस सृष्टि की रक्षा तथा लय करने में समर्थ हो।

ग.ल.व्याख्या- जगदिति। भो सुरधुनि! केचित् साङ्ख्याः अद इदं जगत् मुग्धं मोहान्वितं तथा सुखितं दुःखितं दृष्ट्वा तत्कारणम् अचितं जडं प्रधानं सगुणं मोहादिहेतुसत्त्वादिगुणकं प्रमन्यन्ते कल्पयन्ति। त्वं पुनः सत्त्वादिगुणैर्विरहिता। तत्क्लृप्तैस्तैरेव गुणैः सृजसीत्यहो आश्चर्यम्। अतः स्वयं रक्षां कर्तुं विहर्तुं च प्रभवसि समर्थासीत्यर्थः।

अयं भावः- यद्यपि 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमाना सरूपा' इत्यादिश्रुत्या जगति परिदृश्यमानसुखदुःख-मोहान्वितलिङ्गकसमानगुणहेतुत्वानुमानेन च सत्त्वादिगुणक-प्रधानस्यैव जगत्कारणत्वं वक्तुं शक्यं, तथापि 'क्षरं प्रधानममृताक्षरम् हरः क्षरात्मा नावीशते देव एकः', 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इत्यादिश्रुत्यन्तरानुसारेण तस्याः परमेश्वराधीनमूलप्रकृतिपरत्वात्, सुखादेरान्तरतया जगति हेतोरसिद्धेश्च, न वक्तुं युक्तम्। तथा च न साङ्ख्यमतसिद्धिरिति भावः।।

इति प्रधानवादिनिरासप्रकरणम्।।६।।

## अथ परमाणुवादनिरासप्रकरणम्

परे प्राहुः सृष्टिं जननि परमाणुद्व्यणुकतः<br>
श्रुतिर्येषां नाप्ता[11] श्रुतिपथमतस्तर्कशरणाः।<br>
अहो त्वं त्यक्त्वाणुद्व्यणुकमुखमेतां त्रिजगतीं<br>
करोषि त्वं पासि प्रलयपथमेनां गमयसि।।७।।

पदच्छेदः - परे प्राहुः सृष्टिम् जननि! परमाणु-द्व्यणुकतः, श्रुतिः येषाम् न आप्ता श्रुति-पथम् अतः तर्क-शरणाः। अहो त्वम् त्यक्त्वा

अणु-द्वयणुक-मुखम् एताम् त्रिजगतीम्, करोषि त्वम् पासि प्रलय-पथम् एनाम् गमयसि।।

**अन्वय** - *भो जननि! येषां श्रुतिः श्रुतिपथं न आप्ता अतः तर्कशरणाः परे परमाणुद्वयणुकतः सृष्टिं प्राहुः। अहो त्वम् अणुद्वयणुकमुखं त्यक्त्वा एतां त्रिजगतीं करोषि, पासि एनां प्रलयपथं गमयसि।*

**भावार्थ** – हे जननि! जिनके कर्णपथ तक श्रुतिवचन नहीं पहुँच सके हैं। ऐसे तर्कमात्र पर आश्रित नैयायिकों ने परमाणु एवं द्वयणुक् से सृष्टि माना है, किन्तु तुम परमाणु एव द्वयणुकों के क्रम को छोड़कर ही इस त्रिजगती की सृष्टि करती हो, उसकी रक्षा करती हो तथा प्रलय भी करती हो।

**ग.ल.व्याख्या- पर इति। भो जननि! येषां श्रुतिः कर्णपथं न प्राप्ता अतस्ते तर्कशरणाः परे नैयायिकाः परमाणुद्व्यणुकतः परमाणोर्द्व्यणुकं ततस्त्र्यणुकमित्यादिक्रमेण सृष्टिमाहुः। त्वं पुनः अणुद्व्यणुकमुखपरमाण्वादिक्रममुल्लङ्घ्यैव त्रिजगतीं करोषि पासि प्रलयमार्गं प्रापयसीत्यहो आश्चर्यमित्यन्वयः।**

**यद्यपि 'धानारुह इव वृक्षोऽञ्जस' इति श्रौतदृष्टान्तेन कार्यस्य स्वन्यूनपरिमाणकसमानजातीयद्रव्यारभ्यत्वनियमेन च लोकदृष्टेन परमाणुवादो वक्तुं शक्यस्तथापि दीर्घेणैकेन तन्तुना द्विगुणीकृतेन, ह्रस्वद्रव्योत्पत्तेर्दृष्टतया न्यूनपरिमाणवदारभ्यत्वनियमे व्यभिचारात् श्रौतदृष्टान्तस्य तु ब्रह्मणो दुर्ज्ञेयत्वरूपसूक्ष्मत्वाभिप्रायत्वात् 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्', 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यादिश्रुत्या ब्रह्माश्रितानिर्वचनीयानाद्यविद्याया एव हेतुत्वा-वधारणाच्च परमाणुवादः प्रामादिकः इति भावः।**

**इति परमाणुवादनिरासप्रकरणम्।।७।।**

## अथ कार्यान्वयनिरासप्रकरणम्

**विधिं यद्वच्छक्त्या[12] वदति परमाम्नायनिवहो**
**यदाप्त्यै[13] सिद्धं च प्रवदति स तद्वत्परमिह।**
**समस्ताधिष्ठानं रहितपरिमाणं सुखभरं**
**तदेव त्वं गङ्गे भवसि भवभीतार्तिहरिणि।।८।।**

**पदच्छेदः** - विधिम् यद्वत् शक्त्या वदति परम-आम्नाय-निवहः, यद् आप्त्यै सिद्धम् च प्रवदति स तद्वत् परम् इह। समस्त-अधिष्ठानम् रहित-परिमाणम् सुखभरम्, तद् एव त्वम् गङ्गे भवसि भव-भीत-आर्ति-हरिणि।।

**अन्वयः**- *भो गङ्गे! भवभीतार्तिहरिणि! आम्नायनिवहः वेदसमूहः यद्वत् यदाप्त्यै शक्त्या विधिं वदति तद्वत् स रहितपरिमाणम् समस्ताधिष्ठानं परं सिद्धं सुखभरं वदति। तदेव त्वम् (भवसि)।*

**भावार्थ** - भवभीति रूपी आर्ति का हरण करने वाली हे गङ्गे! वेदसमूह जिस प्रकार से (उसे) परमात्मा को प्राप्त करने के लिए विधि को कहता है उसी प्रकार वेदसमूह ही परिमाणरहित अर्थात् अनन्त तथा समस्त चराचर के आश्रय परमात्मा को, जो आनन्दकन्दरूप है, उसे भी कहता है। वेद जिस परमात्मा को कहता है वह तुम ही हो।

**ग.ल.व्याख्या- विधिमिति। भो गङ्गे भवभीतार्तिहरिणि! आम्नायनिवहः वेदसमूहः यद्वत् यथा यदाप्त्यै यत्प्राप्त्यै विधिं प्रवर्तनां वदति तद्वत् तथा रहितपरिमाणम् अनन्तसमस्ताधिष्ठानं परं परमात्मानं सिद्धं सुखभरम् आनन्दकन्दं वदति तदेव त्वमित्यन्वयः।**

**अयं भावः-यद्यपि वेदान्तानां सिद्धार्थत्वे नदीतीरफलसत्ता-वाक्यवत् पौरुषेयत्वापत्तिः सिद्धवस्तुबोधकवाक्यस्य प्रमाणान्तर-**

जधीपूर्वकत्वदर्शनादतः कार्यपरत्वमेव, कार्यविषयतामन्तरेण पुरुषार्थपर्यवसानाभावादिति वक्तुं शक्यम्, तथापि न तद्युक्तम्, सिद्धब्रह्मबोधादपि फलस्य श्रवणाद्, वेदान्तानां कार्यपरत्वे मानाभावात्। न च नदीतीरफलवाक्यवत् पौरुषेयत्वापत्तिः ब्रह्मात्मैक्यस्य मानान्तरागम्यत्वेन तत्र वाक्यरचनानुपपत्तेरिति भावः।

इति कार्यान्वयनिरासप्रकरणम्।।८।।

## अथ व्युत्पत्तिप्रकरणम्

त्वमेवाभास्यम्ब स्फुटविधिविधेयादिकपदै-
र्यतो हानादानादिभिरपि च लिङ्गैर्व्यवहृतिः।
प्रसन्नास्यैर्लिङ्गैरपि च विदिता सिद्धपदत-
स्त्वमेवानन्दात्माऽनुभवपदवीं यासि नियतम्[14]।।९।।

**पदच्छेदः** – त्वम् एव आभासि अम्ब स्फुट-विधि-विधेय-आदिक-पदैः, यतः हान-आदान-आदिभिः अपि च लिङ्गैः व्यवहृतिः। प्रसन्न-आस्यैः लिङ्गैः अपि च विदिता सिद्धपदतः, त्वम् एव आत्म-आनन्द-अनुभव-पदवीं यासि नियतम्।।

**अन्वयः**– *भो अम्ब! स्फुटविधिविधेयादिकपदैः त्वम् एव आभासि। यतः (येषु) हानादानादिभिः लिङ्गैः व्यवहृतिः (भवति), अपि च प्रसन्नास्यैः लिङ्गैः, सिद्धपदतः विदिता त्वमेव आनन्दात्मा अनुभवपदवीं नियतं यासि।*

**भावार्थ** – हे जननि! लिङ्ग क्रिया कारक पदों से तुम ही आभासित होती हो। आवापोद्वाप रूपी हेतुओं से जिसमें व्युत्पत्तिग्रह होता है तथा प्रसन्नमुखत्वादि

हेतुओं से जो विदित होता है एवं प्रसिद्ध पद के प्रयोग से जो ज्ञात होता है वह आनन्दरूपा तुम ही हो। तुम ही आनन्दानुभूति रूपी पदवी को सदा प्राप्त करती हो।

**ग.ल.व्याख्या- त्वमेवाभास्यम्बेति। भो अम्ब मातः स्फुट-विधिविधेयादिकपदैः लिङ्क्रियाकारकादिकपदैः अंशत्रयविशिष्ट-भावनाबोधकपदैरिति यावत्, त्वमेवाभासि। यतः येषु पदेषु हानादानादिभिः उद्वापावापादिभिर्लिङ्गैर्व्यवहृतिः व्युत्पत्तिग्रहो भवति, अपि च प्रसन्नास्यैः प्रसन्नमुखत्वादिभिर्लिङ्गैः सिद्धपदतः अक्रियार्थ-पदतो विदिता त्वमेवानन्दरूपा अनुभवपदवीं यासि। प्रसन्न-मुखत्वादिलिङ्गेन सिद्धार्थपदानां यत्र शक्तिग्रहः सापि त्वमेवेति यावत्। प्रवृत्तित इव मुखविकासादिलिङ्गैरपि व्युत्पत्तिग्रहस्य दृष्टत्वात् सर्वत्र प्रवर्तकानपेक्षणात् स्याद् वेदान्तैर्ब्रह्मावगम इति भावः।**

**अयं निष्कर्षः- यद्यपि सिद्धस्याप्रतिपित्सितत्वादप्रतिपिपाद-यिषितत्वाच्च तत्र वाक्यप्रयोगायोगात् वाक्यप्रयोगाविषये च शब्दानां व्युत्पत्त्यग्रहान्न वेदान्तानां सिद्धब्रह्मपरत्वम्, प्रवृत्तिलिङ्गेन कार्यान्वित एव सर्वत्र पदानां शक्त्यवधारणादिति वक्तुं शक्यं, तथापि गामानयेत्यादौ प्रवृत्तिलिङ्गेन कार्यबोधमिव 'भद्र पुत्रस्ते जात' इत्यभिहितवति वार्त्ताहारे तेन सह समागतस्य पान्थस्य पितृमुखप्रसादादिना हर्षमनुमिन्वतो हर्षेण च हर्षहेतुबोधं कल्पयतो बोधहेतुभूतवाक्यघटकपदानां बोधविषयकार्यांश इव सिद्धेऽपि शक्त्यवगमात् कार्यान्वित एव पदानां व्युत्पत्तिनियमस्या-प्रामाणिकत्वात् प्रवर्तकवाक्यस्येव सिद्धार्थवाक्यस्याप्यर्थवत्त्वाद् वेदान्तानां ब्रह्मपरत्वमव्याहतमेवेति दिक्।**

**इति व्युत्पत्तिप्रकरणम्।।९।।**

## अथ प्रवर्तकनिरूपणम्

**त्वमेवान्तःस्वान्तं यमयसि बहिः पूरुषवपु-**
**र्मतिः सर्वेष्टानां जनिकरणमप्यम्ब[15] भवती।**
**अतस्त्वं नः[16] स्वान्तं स्वपदविषयं वर्ष्म मलिनं[17]**
**स्वसान्निध्यात् पूतं कुरु करुणयानन्दलहरि[18]।।१०।।**

**पदच्छेदः** - त्वम् एव अन्तःस्वान्तम् यमयसि बहिः पूरुषवपुः, मतिः सर्वेष्टानाम् जनि-करणम् अपि अम्ब! भवती। अतः त्वम् नः स्वान्तम् स्व-पद-विषयम् वर्ष्ममलिनम्, स्व-सान्निध्यात् पूतं कुरु करुणया आनन्द-लहरि।।

**अन्वय-** *भो आनन्दलहरि! त्वमेव अन्तः स्वान्तं यमयसि पुरुषवपुः बहिः यमयसि। सर्वेष्टानां जनिकरणं मतिः अपि अम्ब! भवती (एव)। अतः नः स्वान्तं स्वपदविषयं मलिनं वर्ष्म (च) स्वसान्निध्यात् करुणया पूतं कुरु।*

**भावार्थ** – हे आनन्दलहरि! तुम ही हृदय में अन्तःकरण को प्रेरित करती हो, तुम ही बाहर राजा एवं गुरु आदि को प्रेरित करती हो। हे अम्ब! सभी इष्टों को उत्पन्न करने वाली मति भी तुम ही हो। अतः हमारे मलिन अन्तःकरण को तथा मलिनशरीर को अपने सान्निध्य से पवित्र करो।

**ग.ल.व्याख्या- त्वमेवान्त इति। भो आनन्दलहरि! त्वमेवा-न्तर्यामिरूपा अन्तः हृदि स्वान्तम् अन्तःकरणं यमयसि प्रेरयसि। पुरुषवपुः राजगुर्वादिरूपा बहिर्देहादिकं यमयसि। प्रवृत्तिजनक-सर्वेष्टजनिकरणमतिरूपापि त्वमेव। अतः नः अस्माकं स्वान्तम् अन्तःकरणं स्वस्वरूपविषयं वर्ष्म शरीरं च स्वसान्निध्यैः पूतं पवित्रं कुर्वित्यर्थः।**

**अयं भावः-** अन्वयव्यतिरेकाभ्यां समीहितसाधनताज्ञानस्यैव प्रवृत्तिहेतुत्वान्न कार्यताज्ञानं प्रवर्तकम्, इष्टसाधनव्यतिरेकेण तस्या-सम्प्रतिपन्नत्वात्। तथा च न वेदान्तश्रवणादौ प्रवृत्त्यनुपपत्तिरिति।।

इति प्रवर्तकनिरूपणम्।।१०।।

## अथ अन्विताभिधानप्रकरणम्

यथा संसृष्टार्थे भवति धिषणा लोकविषयै-
र्वचोभिस्तद्वद्वाऽभिहितमतगायां[19] श्रुतिगिरा।
तथानन्दाख्यायां सकलपुरुषार्थस्य करणे
समर्थायां स्मृत्या त्वयि हि जनतायास्त्रिपथगे।।११।।

**पदच्छेदः -** यथा संसृष्ट-अर्थे भवति धिषणा लोक-विषयैः वचोभिः तद्वद् वा अभिहित-मतगायाम् श्रुतिगिरा। तथा आनन्द-आख्यायाम् सकल-पुरुष-अर्थस्य करणे, समर्थायाम् स्मृत्या त्वयि हि जनतायाः त्रिपथगे !।।

**अन्वयः-** *भो त्रिपथगे! यथा लोकविषयैः वचोभिः संसृष्टार्थे तद्वद्वा अभिहितमतगायां धिषणा भवति तथा स्मृत्या जनतायाः सकलपुरुषार्थस्य करणे समार्थायाम् आनन्दाख्यां त्वयि* (धिषणा भवति)

**भावार्थ –** हे त्रिपथगे ! जिस प्रकार लौकिक वाक्यों से अन्विताभिधानवाद के पक्ष में परस्पर अन्वित अर्थ में तथा अभिहितान्वयवाद की दृष्टि से लौकिक अर्थ में बुद्धि होती है उसी प्रकार श्रुतिवाक्यों से, स्मृति मात्र से सभी पुरुषार्थों को करने में समर्थ तुममें जनसमूह की बुद्धि होती है।

**ग.ल.व्याख्या-** यथासंसृष्टार्थ इति। भो त्रिपथगे! यथा लोक-विषयैर्वचोभिः वाक्यैः संसृष्टार्थे इतरान्विते अथवा अभिहितमतगायां

धिषणा भवति तथा हि निश्चयानेकश्रुतिगिरा वेदवचसा स्मृत्या स्मृतिमात्रेण जनताया जनसमूहस्य सकलपुरुषार्थस्य करणे समर्थायां त्वयि धिषणा भवतीत्यन्वयः।

अयं भावः –यद्यपि अन्विताभिधानपक्षे तदादिपदानामितरान्वितप्रतियोगिकान्वयधियं प्रत्येव हेतुत्वान्नानन्वितब्रह्मानुभावकत्वं सम्भवति, तथाभिहितान्वयवादेऽपि अनुभावकत्वरूपशक्तेर्लाक्षणिकेष्वनभ्युपगमात्, तेष्वपि तत्स्वीकारे तु मुख्यामुख्यविभागानुपपत्तिः, तथाप्यन्विताभिधानपक्षेऽन्वितेत्यस्य स्वघटितवाक्यतात्पर्यविषयार्थकत्वात् तात्पर्यविषयस्यानन्वितस्यापि बोधकत्वमव्याहतम्। एवमभिहितपक्षेऽपि शक्तिस्थले प्रकृतिप्रत्ययाभ्यां स्वार्थस्मृतिः। स्मृताभ्यां ताभ्यां प्रकृत्यर्थान्वितप्रत्ययार्थबोधस्ताभ्यामेव चानुभवाभ्यां पदार्थयोः संसर्गावगमः। लक्षणास्थले तु पदजन्यशक्त्योपस्थितिप्रयोज्यलक्ष्योपस्थितेरेवानुभावकत्वं पदाजन्यत्वेऽपि शाब्दत्वं तु पदप्रयोज्यत्वात् अवतार्किकाद् भेदः। तन्मते शाब्दबोधस्य पदज्ञानकरणकत्वादवान्तरवाक्यार्थानुभवस्यैव महावाक्यार्थबोधहेतुत्वात्।।

इत्यन्विताद्यभिधानप्रकरणम् ११।।

## अथ ब्रह्मणि क्रियानपेक्षप्रामाण्यम्

न चोत्पाद्याप्या वा सुरधुनि विकार्याऽत्रभवती[20]
न वा त्वं[21] संस्कार्या भजसि न च शेषत्वपदवीम्।
उपास्तेः[22] श्रौत्या हि श्रुतिगतरवैकाधिगमिता-
ऽमृतं रास्येवैभ्यो विरहितजगत्कार्यविषया।।१२।।

**पदच्छेदः** - न च उत्पाद्या आप्या वा सुरधुनि! विकार्या अत्रभवती, न वा त्वम् संस्कार्या भजसि न च शेषत्व-पदवीम्। उपास्तेः श्रौत्या हि श्रुति-गत-रव-एक-अधिगमिता, अमृतम् रासि एव एभ्यः विरहित-जगत्-कार्य-विषया।।

**अन्वयः**- *भो सुरधुनि! त्वम् अत्रभवती उत्पाद्या आप्या विकार्या संस्कार्या वा न (भवसि)। न च श्रौत्या उपास्तेः शेषत्वपदवीं भजसि। हि श्रुतिगतरवैकाधिगमिता विरहितजगत्कार्यविषया एभ्यः अमृतं रासि एव।*

भावार्थ – हे सुरधुनि! तुम न ही घटादि पदार्थों की भाँति उत्पाद्य हो, न ही वृक्षादि की भाँति विकार्य हो और न ही धान्यादि की भाँति संस्कार्य हो। उत्पत्ति, स्थिति, विकृति तथा संस्कार रूप जो क्रियाएँ हैं, वे तुममें नहीं होती हैं। तुम श्रुतिवाक्यों से उपासनाशेष के रूप में भी प्रतिपाद्य नहीं हो। तुम श्रुतिवचनों से ही बोधित होती हो। जगत् के उद्धार के विना तो तुम जगत् में कार्यरूपी विषय से रहित हो। तुम संसार को मोक्षरूपी अमृत प्रदान करती हो।

**ग.ल.व्याख्या- न चोत्पाद्येति। भो सुरधुनि! त्वम् अत्रभवती पूज्या घटादिवदुत्पाद्या ग्रामवत् प्राप्या वृक्षवद् विकार्या व्रीह्यादिवत् संस्कार्या वा न भवसि। उत्पत्तिस्थितिविकारसंस्काररूपाः क्रिया-स्त्वयि न सन्तीति यावत्। न च श्रौत्या उपास्तेः शेषत्वपदवीं, भजसि। उपासनाशेषत्वेन न त्वं श्रुतिप्रतिपाद्येति यावत्। हि यस्मात् श्रुतिगतो यो रवः शब्दः तेनैवैकेन अधिगमिता बोधिता। जगदुद्धारं विना विरहितः जगतिकार्यरूपो विषयो यस्या ईदृशी त्वम् एभ्यो जनेभ्यः अमृतं मोक्षं रास्येव ददास्येवेत्यर्थः।**

**अयं भावः-यद्यपि 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्युपदेश-मात्रेण मोक्षादर्शनात् मननादेश्च विधानात् प्रतिपत्तिविधिपरा एव वेदान्ताः प्रतिपत्तिविधिशेषत्वेनैव ब्रह्मावगमयन्ति, न साक्षात्।**

मोक्षोऽपि विधेयोपासनाफलत्वेनैवाभ्युपगन्तव्य इति वक्तुं शक्यम्, तथापि ब्रह्मसाक्षात्कारात् परमानन्दाभिव्यक्तेर्दुःखोच्छेदस्य च फलस्य 'आत्मानं चेद् विजानीयाद्' इति श्रुतिसिद्धत्वान्मननस्य च श्रवणवदप्रतिबद्धापरोक्षसाक्षात्कारार्थत्वात् साक्षात्कारस्य च दृष्टफलत्वादवगतब्रह्मणश्चापूर्वानुपयोगादुपासनासाध्यत्वे मोक्षस्योपासनावत्तारतम्याद्यापत्तेश्च नोपास्तिविधिपरा वेदान्ताः। न वा तच्छेष्यत्वेन ब्रह्मावगमयन्ति। तथा सत्यद्वयब्रह्मासिद्धि-प्रसङ्गात्। प्रत्यक्षादिविरोधेऽन्यपरवाक्यात् तदसिद्धेरारोपेणाप्युपासनासम्भवात्।

इति ब्रह्मणि क्रियानपेक्षं प्रामाण्यम्।।१२।।

## अथ लौकिकाखण्डवाक्यार्थनिरूपणम्

उदाहृत्य प्राहुर्निगमपटवः सोऽयमिति यत्
परं[23] तत्त्वं श्रौतं विरहितपदं सर्वविषयैः।
उदस्यास्य क्लेशं तनुभृत इहास्यत्रभवती
तदेव त्वं पूर्णाऽमृततनुरिहोद्धर्तुमखिलम्।।१३।।

**पदच्छेदः** - उदाहृत्य प्राहुः निगम-पटवः सः अयम् इति यत्, परम् तत्त्वम् श्रौतम् विरहित-पदम् सर्व-विषयैः। उदस्य अस्य क्लेशम् तनुभृत इह असि अत्रभवती, तद् एव त्वम् पूर्णा अमृत-तनुः इह उद्धर्तुम् अखिलम्।।

**अन्वयः**- *निगमपटवः अस्य तनुभृत क्लेशम् उदस्य सोऽयम् इत्युदाहृत्य सर्वविषयैः विरहितपदं श्रौतं तत्त्वं प्राहुः। अत्रभवती तदेव। त्वं पूर्णा अखिलम् उद्धर्तुम् इह अमृततनुः असि।*

**भावार्थ** – हे सुरधुनि! श्रुतिनिपुण जन शरीरधारी जीवों के कष्टों को दूर करके 'सोऽयं देवदत्तः' इत्यादि उदाहरणों के द्वारा सभी विषयों से अलग जिस श्रौत तत्त्व का प्रतिपादन करते हैं, वह तुम ही हो। तुम ही पूज्या हो, पूर्णा हो तथा सभी का उद्धार करने के लिए जलमय शरीर धारण करती हो।

ग.ल.व्याख्या- उदाहृत्येति। भो सुरधुनि! निगमपटवः श्रुतिनिपुणाः अस्य तनुभृतः जीवस्य क्लेशम् उदस्य दूरीकृत्य सोऽयमित्युदाहृत्य यत् सर्वविषयैर्विरहितपदं श्रौतं तत्त्वं प्राहुः, तदेव त्वम्। पूर्णा अथापि अखिलम् उद्धर्तुं जलतनुरसीत्यन्वयः।

अयं भावः-यद्यपि 'सोऽयं देवदत्त' इत्यत्र स शब्देनातीत-देशकालपरित्यागेन लक्षिते देवदत्तस्वरूपे वर्तमानदेशकालवैशिष्ट्य-स्यायं शब्देन प्रतिपादनात् तावतैव पूर्वोत्तरदेवदत्तस्वरूपाभेदसिद्धेः केवलव्यक्तिमात्रपरतायां मानाभावान्न तद्दृष्टान्तेन तत्त्वमस्यादि-वाक्यानां शुद्धाभेदपरत्वं युक्तम्, तथापि विशिष्टस्य केवलाद् भिन्नतया वर्तमानदेशकालवैशिष्ट्यविधानतद्विधानानुपपत्तेः, केवलविशिष्टयोरभेदस्य प्रतिपाद्यत्वाभावात्, तत्तेदन्ताविशिष्टयो-स्त्वन्यतरविशेषणस्यान्यतरविशेषणविशेष्याभ्यामभेदापत्त्या सुतरां बाधात्, तत्तेदन्तोपलक्षितशुद्धव्यक्तिमात्रपरत्वं 'सोऽयम्' इति वाक्यस्य। किं च 'सोऽयम्' इति वाक्यम् अखण्डार्थपरम्, अकार्यकारणमात्रम्। द्रव्यनिष्ठत्वे सति सामानाधिकरणवाक्यत्वात् व्यतिरेके संमतवत्। 'नीलमुत्पलम्' इत्यादिवारणाय सत्यन्तम्। 'कुण्डे वदरम्' इत्यादिवारणाय विशेष्यम्।।

इति लौकिकाखण्डवाक्यार्थनिरूपणम्।।१३।।

## अथ वैदिकाखण्डवाक्यार्थनिरूपणम्

**गिरां सत्यज्ञानाद्वयसुखमुखानां भगवती**
**त्वमेवाखण्डार्थस्त्वमसि तदहं तच्छ्रुतिगिराम्।**
**तथैवाखण्डार्थः सुरधुनि समस्ताघहरणे**
**समर्था कारुण्यादिह दृशिपथं यासि नियतम्[14]।।१४।।**

**पदच्छेदः –** गिराम् सत्यज्ञान-अद्वय-सुख-मुखानाम् भगवती, त्वम् एव अखण्ड-अर्थः त्वम् असि तत् - श्रुतिगिराम्। तथा एव अखण्ड-अर्थः सुरधुनि! समस्त-अघ-हरणे, समर्था कारुण्याद् इह दृशि-पथम् यासि नियतम्।।

**अन्वय –** *भो सुरधुनि! सत्यज्ञानाद्वयसुखमुखानां गिराम् अखण्डार्थः भगवती त्वमेव । तथैव 'तत् त्वमसि' 'अहं (ब्रह्मास्मि)' इति श्रुतिगिराम् अखण्डार्थः त्वमेव। (अथापि) इह दृशिपथं नियतं यासि। अतः कारुण्याद् समस्ताघहरणे (त्वं) समर्था (असि)।*

**भावार्थ –** हे सुरधुनि! 'सत्यं ज्ञानमखण्डं ब्रह्म' इत्यादि वैदिक वाक्यों का अखण्डार्थ तुम ही हो। इसी प्रकार 'तत्त्वमसि' इत्यादि वैदिक महावाक्यों का भी अखण्डार्थ तुम ही हो। तथापि करुणा के कारण तुम सभी के पापों का हरण करने में समर्थ होती हुई इस पृथिवीलोक में जल के रूप में लोगों के प्रत्यक्ष का विषय हो।

**ग.ल.व्याख्या- गिरामिति। भो सुरधुनि! सत्यज्ञानाद्वय-सुखमुखानां गिरां भगवती षडैश्वर्यसम्पन्ना त्वमेवाखण्डार्थः। अनेन पदार्थाखण्डार्थता दर्शिता। वाक्याखण्डार्थतामाह त्वमिति। तथैव 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इति श्रुतिगिरां वेदवचसां महावाक्यानाम् अखण्डार्थस्त्वमेव। अथापि इह भुवि जनेषु दृष्टिपथं प्रत्यक्षविषयतां नियतं यासि जलरूपेणेति शेषः। अतः सर्वाघहरणे समर्था त्वमेव इत्यन्वयः।**

सत्यादिवाक्यानां स्वरूपमात्रपर्यवसायित्वलक्षणमखण्डार्थत्वं प्रकृष्टप्रकाशवाक्यवल्लक्षणवाक्यत्वाद् बोध्यम्। 'यतो वा' इत्यादिवाक्यानामपि लक्षणया लक्ष्यबोधकत्वस्य समानत्वेऽपि सत्यादिवाक्यानां स्वरूपे भ्रमसंशयनिवर्तकलक्षणतो लक्ष्य-समर्पकत्वलक्षणो विशेषो ग्रन्थान्तरे द्रष्टव्यः। 'तत्त्वमसि' आदि-वाक्यानां त्वखण्डार्थपर्यवसायित्वं सोऽयमिति वाक्यवत् कथितम्-

त्वमहंशब्दलक्ष्यार्थः साक्षात् प्रत्यक् चितिः परा।
तद् ब्रह्मशब्दलक्ष्यार्थः सैव नात्र विचारणा।।

तदर्थैक्यविरुद्धांशं त्यक्त्वा वाच्यगतं श्रुतिः।
अविरुद्धचिदाकारं लक्षयित्वा ब्रवीति हि।
त्वमहं शब्दलक्ष्यस्य चिन्मात्रस्य परात्मना।
एकत्वं यत् स्वतः सिद्धं स हि वाक्यार्थ इष्यते।।

इति स्कन्दपुराणवाक्यैश्च बोध्यम्।

ननु महावाक्यार्थस्यैक्यस्य संसर्गत्वे अखण्डार्थत्वभङ्गः शुद्ध-व्यक्तिमात्ररूपत्वे तु महावाक्यमवान्तरवाक्यानुवादकं स्यादिति चेन्न, शुद्धैक्यस्य शुद्धव्यक्तिमात्ररूपत्वेऽपि त्वमादिपदवाच्यार्थ-प्रतियोगिकतादात्म्यसंसर्गधीपूर्वकशुद्धधीजनकत्वं महावाक्याना-मेवेति नावान्तरवाक्यानुवादकत्वमिति भावः।

अयं निष्कर्षः-यद्यपि नीलोत्पलादिवत् सत्यादीनां गुणगुणि-भावेनापि सामानाधिकरण्योपपत्तेर्लक्षणहेतोर्मुख्यार्थपरिग्रहानु-पपत्तेरभावाद् वेदे लक्षणाया अयोगाच्च न सत्यादिवाक्यं प्रकृष्ट-प्रकाशवाक्यवदखण्डार्थविषयम्। एवं तत्त्वमस्यादिवाक्यमपि न 'सोऽयं देवदत्त' इतिवदखण्डार्थविषयं तत्तेदन्तयोरिव तत्-त्वं-पदवाच्य-( विशेष्य ) विशेषणयोः समकालिकत्वबाधाभावादिति

**वक्तुं शक्यम्, तथापि किं तद् ब्रह्मेति ब्रह्मबुभुत्सया प्रवृत्तसत्यादि-वाक्यस्य गुणगुणिभावपरत्वेऽनवच्छिन्नवस्तुपराणां ब्रह्मानन्तादि-शब्दानामनन्वयः प्रसज्येत। 'यतो वाचो निवर्तन्ते' इत्यवाङ्मनस-गोचरत्वश्रुतिः 'नेह नानास्ति' इत्यादिसर्वप्रतिषेधश्रुतिश्च बाध्येतातो न तन्नीलोत्पलवाक्यवद् विशिष्टविषयं किं तु प्रकृष्टप्रकाश-वाक्यवदखण्डार्थविषयमेव। एवं 'तत्त्वमसि' इत्यपि अखण्डैकरस-वस्तुपर्यवसानमन्तरेणाप्रामाण्यानुपपत्तेः सर्वांशेऽबाधितविषयक-धीकरणस्यैव प्रमाणत्वादित्याद्यन्यत्र विस्तरः।।**

**इति वैदिकाखण्डवाक्यार्थनिरूपणम्।।१४।।**

## अथ शब्दप्रवृत्तिनिरूपणम्

**अशेषा वेदान्ता अभिदधति लक्ष्यां भगवती-**
**मगम्या विज्ञात्री सुरधुनि सुमानान्तर[25]चयैः।**
**अहो त्वं विन्यस्तानृत[26]तनुविशेषाऽत्र भवती**
**जनानां कारुण्यादमृतरसधारां वितरसि।।१५।।**

**पदच्छेदः** - अशेषाः वेदान्ताः अभिदधति लक्ष्याम् भगवतीम्, अगम्या विज्ञात्री सुरधुनि! सुमानान्तर-चयैः। अहो त्वम् विन्यस्त-अनृत-तनु विशेषा अत्रभवती, जनानाम् कारुण्याद् अमृत-रसधारां वितरसि।।

**अन्वयः-** *भो सुरधुनि! अशेषाः वेदान्ताः भवतीं लक्ष्यां भगवतीम् अभिदधति। अहो अत्रभवती त्वम् सुमानान्तरचयैः अगम्या विज्ञात्री विन्यस्तानृततनुविशेषा कारुण्याद् जनानाम् अमृतरसधारां वितरसि।*

भावार्थ – हे सुरधुनि ! सम्पूर्ण वेदान्त तुम्हें ही लक्षण का विषय बताते हैं। तुम ही विभिन्न प्रमाणों के समूहों से भी अगम्य हो तथापि भी मिथ्याशरीरविशेष को धारण करती हुई अपनी करुणा से लोगों को अमृत रस की धारा प्रदान करती हो।

ग.ल.व्याख्या- अशेषा इति। भो सुरधुनि! अशेषा वेदान्ता भवतीं लक्ष्यां लक्षणविषयाम् अभिदधति वदन्ति। यतस्त्वं सुमानान्तरचयैः अगम्या विज्ञात्री विन्यस्तः त्यक्तः अनृतो जगद्रूप-स्तनुविशेषो यया अत्रभवती पूज्या। अतः कारुण्यात् जनानाम् अमृतलक्षणरसस्य धारां वितरसीत्यन्वयः। निरवधिमोक्षसुखं ददासीति यावत्।

अयं भावः–यद्यपि निर्विशेषतया ब्रह्मणि शक्तिरिव प्रमाणान्तरानुपस्थिते सर्वसम्बन्धशून्ये लक्षणापि दुर्घटा, प्रमाणान्त-रोपस्थित एव देवदत्तादौ तदादिपदानां लक्षणाया दर्शनादिति वक्तुं शक्यम्, तथापि विशिष्टस्येव तद्घटकचिदंशस्यापि शक्त्यैवो-पस्थितौ सत्यां जडत्वावच्छिन्नं मिथ्येति बोधिते सति तर्काच्छुद्धो-पस्थितौ सत्यामाध्यासिकविशिष्टतादात्म्यवति भागत्यागवृत्तिः सुकरा। न च विशेषणस्य बाधात् तत्रानन्वयो, न तु विशेष्ये लक्षणेति वाच्यम्, परिभाषामात्रत्वापत्तेः। अन्वयप्रतियोगिपदार्थ-मात्रस्य वृत्त्योपस्थित्यङ्गीकारात्। तदुक्तम्-'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति। स्यादेतत्, विशिष्टेऽपि पदानां शक्तिः कथं ग्राह्येति चेत् यूपाहवनीयादिवदित्यवेहि।

इति शब्दप्रवृत्तिनिरूपणम्।।१५।।

## अथ मन्त्रार्थवादप्रामाण्यनिरूपणप्रकरणम्

**कृशानुः सुत्रामा *मरुदथ विधुः[27] सूर्य इति चा-**
**र्थवादैर्मन्त्रैर्वा वदति भवतीमेव च निगमः।**
**त्वमेवेज्यायागैरपि[28]नियमभागैर्विषयतो**
**विरागैस्त्यागैर्वा त्वयि सदनुरागैः सुरधुनि।।१६।।**

**पदच्छेदः –** कृशानुः सुत्रामा मरुद् अथ विधुः सूर्यः इति च, अर्थवादैः मन्त्रैः वा वदति भवतीम् एव च निगमः। त्वम् एव इज्या-यागैः अपि-नियम-भागैः विषयतः, विरागैः त्यागैः वा त्वयि सद्-अनुरागैः सुरधुनि।।

**अन्वयः-** *(भो) सुरधुनि! निगमः कृशानुः सुत्रामा अथ मरुत् विधुः सूर्यः इति च अर्थवादैः मन्त्रैः वा भवतीम् एव वदति। यागैः अपि नियमभागैः विषयतो विरागैः त्यागैः त्वयि सदनुरागैः त्वमेव इज्या।*

**भावार्थ –** हे सुरधुनि! अग्नि, इन्द्र, वायु, चन्द्र, सूर्य आदि के अर्थवादों से वेद तुम्हारी ही स्तुति करते हैं। यज्ञों से, नियमादिकों से, वैराग्य से, संन्यासादि त्याग से और तुममें अनुराग से तुम्हीं अर्चनीया हो।

**ग.ल.व्याख्या-** कृशानुरिति। भो सुरधुनि! निगमः वेदः, कुशानुः अग्निः, सुत्रामा इन्द्रः, अथ मरुत् वायुः, विधुः चन्द्रः, **सूर्य इति अर्थवादैर्मन्त्रैर्वा भवतीमेव वदति।** यागैः यज्ञैः, नियमभागैः यमनियमादिभिः, विषयतो विरागैः विषयवैतृष्ण्येन त्यागैः संन्यासादिभिः, सदनुरागैः सत्प्रेमभिः त्वमेव पूज्येत्यन्वयः।

ननु मन्त्रार्थवादानां विध्येकवाक्यतयाऽन्यत्र तात्पर्यवतां स्वार्थे तात्पर्याभावात् कथं तैर्देवतासिद्धिरिति चेन्मैवम्, प्रमाणान्तरतः प्राप्तिविरोधयोरसतोः पदसमभिव्याहारलभ्यार्थमात्रे शब्दस्य

प्रामाण्यात् तादृशनियमानभ्युपगमात्। अन्यथा रेवतीषु वारवंतीय-मग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति वाक्याद्रेवत्या-धारवंतीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टकर्मविधिपराद्रेवतीर्णः सधयाद इत्यादि ऋक्त्रयाधारवारवंतीयसामरूपमग्निष्टोमस्तोत्रस्य-विशेषणं न सिद्ध्येत्। कवतीषु रथन्तरं गायेदितिवद्रेवतीषु वारवंतीयं गायेदिति तत्प्रमापकविध्यन्तरासत्त्वात्। न चास्यैव विशिष्टगोचरस्य विधेर्विशेषणविधावपि तात्पर्यं वक्तुं शक्यम्, विध्यावृत्तिप्रसङ्गात्। तस्माद्विशिष्टविधेर्विशेषणस्वरूपे तात्पर्याभावेन प्रसिद्धिराश्रयणीया। एवं मन्त्रार्थवादादिभिस्तात्पर्यरहितैरपि देवा न निवार्यन्ते। अन्यार्थप्रवृत्तस्यापि प्रमाणस्य प्रमाणस्वाभाव्येन यावत् स्वविषय-परिच्छेदकत्वावश्यंभावात्।

ननु मन्त्रार्थवादबलाच्छरीरादिदेवताभ्युपगमे विग्रहवतोऽ-नित्यतया शब्दार्थसम्बन्धस्यानित्यत्वप्रसक्तिः। सम्बन्ध्यनित्यत्वे सुतरां सम्बन्धस्यानित्यत्वात्। न चेष्टापत्तिः, तथा सति तस्य पुरुषकृतत्वप्रसक्त्या निरपेक्षत्वहानैर्वेदास्याप्रामाण्यप्रसङ्ग इति चेन्मैवम्, गवादिशब्दानामिवेन्द्रादिशब्दानामप्याकृतिवाचकत्वादा-कृतीनां च नित्यत्वाच्छब्दार्थसम्बन्धस्य नित्यत्वसिद्धेः। तदेवं मन्त्रार्थवादानां प्रामाण्ये तन्मूलकतया पुराणेतिहासानामपि प्रामाण्य-मित्यास्तां विस्तरः।

इति मन्त्रार्थवादप्रामाण्यनिरूपणप्रकरणम्।।१६।।

## अथ वेदस्य स्वतः प्रामाण्यनिरूपणम्

स्वतः प्रामाण्येन श्रुतिरिह निरस्यैव सकलं
कुतर्कोत्थं[29] मानं चितिसुखघनां त्वां भगवतीम्।
*परा‌द्वैतां सत्यां वदति जननि त्वं तु गतये[30]
कृपापारावारा[31] सुरधुनि सुवारात्मकतनुः।।१७।।

**पदच्छेदः** - स्वतः प्रामाण्येन श्रुतिः इह निरस्य एव सकलम्, कुतर्क-उत्थम् मानम् चिति-सुख-घनां त्वाम् भगवतीम्। परा-अद्वैताम् सत्याम् वदति जननि! त्वम् तु गतये, कृपा-पार-अवारा सुरधुनि! सुवारात्मक-तनुः।।

**अन्वयः**- *भो सुरधुनि! श्रुतिः इह सकलं कुतर्कोत्थं मानं निरस्य स्वतःप्रामाण्येन एव पराद्वैतां, सत्यां चितिसुखघनां त्वां भगवतीं वदति। त्वं तु गतये कृपापारावारा कारुण्याब्धिरूपा सुवारात्मकतनुः (असि)।*

**भावार्थ** – हे सुरधुनि! वेद सभी कुतर्क जनित भावों को निरस्त करके स्वतः प्रामाण्य के द्वारा तुम्हें ही आनन्दघन भगवती के रूप में सम्बोधित करता है, तथापि तुम, लोगों की परम गति के लिए कारुण्यसागर होती हुई जलमय शरीर को धारण करती हो।

**ग.ल.व्याख्या- स्वत इति। भो सुरधुनि! श्रुतिः वेदः इह सकलं कुतर्कोत्थं मानं निरस्य स्वतः प्रामाण्येनैव पराद्वैतां सुखघनां त्वां भगवतीं सम्बोधयति। अथापि हे जननि! त्वं तु गतये नृणामर्थात् कृपापारावारा कारुण्याब्धिरूपा सुवारात्मकतनुः सजलशरीरेत्यन्वयः।**

**अयं भावः–यद्यपि सर्वप्रतीतीनां प्रामाण्यं ज्ञानकारणातिरिक्तकारणजन्यं प्रामाण्याप्रामाण्ययोरन्यतरत्वात्, अप्रामाण्यवत्। यदि प्रामाण्यं ज्ञानकारणमात्रजन्यं तथा सति सर्वं ज्ञानं प्रमाणं**

स्यादिति प्रमाणाप्रमाणविभागो न स्यात्। तस्मात् परत एव प्रामाण्यमिति वक्तुं शक्यं, तथापि न ज्ञानं कारणातिरिक्त-कारणजन्यम्, अनुपलभ्यमानतदतिरिक्तकारणकत्वात्। न चालोकादिसहकृतं चक्षुरादिज्ञानकारणं तद्गतगुणोऽञ्जनादिः प्रामाण्यकारणमिति कारणभेदोऽस्त्येवेति वाच्यम्, अञ्जनादि-मतोऽपि भ्रान्त्युपलम्भात्। न दृष्टोऽञ्जनादिः प्रामाण्यकारणम्, नाप्यदृश्यमानगुणकल्पनायां प्रामाण्यमस्ति, स्वत एव चक्षुरादेरप्रतिबद्धात् प्रामाण्यजन्मोपपत्तेः। अप्रामाण्यं तु दोषसहकारात्, तस्मात् प्रामाण्यं स्वत एव प्रतीतीनां यदा तदा सुतरां वेदस्य नित्यत्वनिर्दोषत्वादित्यधिकमाकरे। अत्र कुतर्कोत्थं मानमिति कथनेन दोषसम्भावनयाऽन्यस्याप्रामाण्यमिति ध्वनितम्।

इति वेदस्य स्वतः प्रामाण्यनिरूपणम्।।१७।।

## अथ तत्त्वावेदकप्रामाण्यनिरूपणम्

यदूचुर्वेदान्ताधिगतमतयस्त्वन्मतिकरं
वचः श्रौतं तत्त्वावगमकरणं चानृत[32]पदम्
परं तज्ज्ञानायेत्यहह भवती तत्त्वधिषणां[33]
प्रदातुं दीनेभ्यो जननि जलरूपा विजयसे[34]।।१८।।[35]

**पदच्छेदः** - यद् ऊचुः वेदान्त-अधिगत-मतयः त्वत्-मतिकरम्, वचः श्रौतम् तत्त्व-अवगम-करणम् च अनृत-पदम्। परम् तत्-ज्ञानाय इति अहह भवती तत्त्व-धिषणाम्, प्रदातुम् दीनेभ्यः जननि! जलरूपा विजयसे।।

**अन्वयः**- *भो सुरधुनि! वेदान्ताधिगतमतयः तत्त्वावगमकरणं*

*त्वन्मतिकरं श्रौतं वचः यदूचुः परमन्यत् अनृतपदं तज्ज्ञानाय (ऊचुः) (अथापि) त्वं दीनेभ्यः तत्त्वधिषणां प्रदातुं जलरूपा विजयसे।*

**भावार्थ –** हे सुरधुनि! वेदान्तविद्या को जानने वाले श्रुतिवाक्यों को अद्वैत-तत्त्वबोध में प्रमाण मानते हुए अद्वैतपरकश्रुतिवाक्यों के प्रामाण्य से तुम्हारे विषय में कहते हैं। उससे अतिरिक्त को मिथ्यावस्तु के बोध के लिए कहते हैं। तथापि तुम दीनों को तत्त्वज्ञान देने के लिए ही जलरूप होकर विजयी होती हो।

**ग.ल.व्याख्या- यदूचुरिति। भो सुरधुनि! वेदान्ताधिगतमतयः श्रौतं वचः तत्त्वावगमकरणं त्वन्मतिकरं यदूचुः परमन्यत् अनृतपदं मिथ्याविषयं तज्ज्ञानाय मिथ्यावस्तुबोधाय ऊचुः। अथापि त्वं दीनेभ्यः तत्त्वज्ञानं दातुं जलरूपा विजयस इत्यन्वयः।**

**अयं भावः–यद्यपि सर्वं प्रमाणं तत्त्वावेदकमेव युक्तं प्रमाणत्वाविशेषात्, प्रमाणामतत्त्वावेदकं चेति विप्रतिषेधात्। इत्थं च प्रत्यक्षादिविरोधाददद्वैतागमस्य मुख्यार्थासम्भवे सति गुणवादेनैव प्रवृत्तिर्युक्ता, न प्रत्यक्षाद्युपमर्दकत्वं युक्तमिति वक्तुं शक्यं, तथापि स्यादेतदेवं यदि प्रत्यक्षागमयोरविशिष्टमसम्भावितदोषकारणजन्यत्वं स्याद्, न त्वेतदस्ति। तथाहि इन्द्रियजन्यं विज्ञानं क्वचिद् विषयदोषाद् दुष्यति तथा दूरस्थे क्वचिदिन्द्रियदोषात् यथा शुक्तिरजतादौ क्वचिदन्तःकरणदोषाद् यथा देहाद्यात्मत्वे। अतः सम्भावित-दोषकारणं प्रत्यक्षं शब्दस्य तु स्वतो दोषत्वकल्पनायां तज्जनित-विज्ञानस्य सर्वस्याप्रामाण्यप्रसङ्गात्। नित्यतया वेदवाक्यस्य पुरुषसम्बन्धनिमित्तदोषाभावाच्च असम्भावितदोषकारणजन्यमेव वैदिकज्ञानम्। अतः प्रत्यक्षादागमो बलीयानित्यधिकमाकरे।।**

**इति तत्त्वावेदकप्रामाण्यनिरूपणम्।।१८।।**

## अथ वेदस्यापौरुषेयत्वनिरूपणम्

**श्रुतिर्नित्यालोकं सकलमवितुं चातिकृपया**
**ऽधिकारं संवीक्ष्य प्रवदति मखं च व्रतविधिम्।**
**सुतीर्थानां सेवां[36] तप उत सुतीर्थे[37] वितरणम्**
**नुतिं गङ्गे मत्यै तव सुखघनाया अविरतम्।।१९।।**

**पदच्छेदः** - श्रुतिः नित्य-आलोकम् सकलम् अवितुम् च अति-कृपया, अधिकारम् सम्-वि-ईक्ष्य प्र-वदति मखं च व्रत-विधिम्। सु-तीर्थानाम् सेवाम् तप उत सु-तीर्थे वि-तरणम्, नुतिम् गङ्गे मत्यै तव सुख-घनायाः अ-वि-रतम्।।

**अन्वयः**- *भो गङ्गे! नित्या श्रुतिः अधिकारं संवीक्ष्य अतिकृपया सकलम् अवितुं (केषाञ्चित्) मखं (केषाञ्चित्) व्रतविधिं (केषाञ्चित्) सुतीर्थसेवां (केषाञ्चित्) तपः (केषाञ्चित्) सुतीर्थे वितरणं (केषाञ्चित्) नुतिम् अविरतं तव सुखघनाया मत्यै वदति।*

भावार्थ – हे गङ्गे ! नित्यश्रुति लोगों को उनकी पात्रता के अनुसार उन पर कृपापूर्वक किसी को यज्ञ, किसी को व्रत, किसी को सुतीर्थसेवा, किसी को सुतीर्थ में दान तथा किसी को नमस्कारादि रूप भक्ति का तुम्हारे सुखस्वरूप के ज्ञान के लिए सदा उपदेश करती है।

ग.ल.व्याख्या- श्रुतिरिति। भो गङ्गे नित्या श्रुतिः सकलं लोकम् अधिकारं संवीक्ष्य केषाञ्चित् व्रतविधिं केषाञ्चित् तपः केषाञ्चित् सुतीर्थसेवां केषाञ्चित् तीर्थे दानं केषाञ्चित् नुतिं नमस्कारादिभक्तिम् अविरतं तव सुखघनाया मत्यै वदतीत्यन्वयः।

नित्यत्वमत्रापौरुषेत्वं नाविनाशित्वम्, ब्रह्मव्यतिरिक्तस्य तदनभ्युपगमात्। यद्यपि वेदो विशिष्टबहुज्ञपुरुषप्रणीतो भवितुमर्हति बह्वर्थविषयवाक्यप्रमाणत्वात्। यदेवं तत्तथा यथा व्याकरणादि-

पाणिन्यादिविरचितं तथाऽयमुक्तसाधनो वेदस्तस्मादुक्तसाध्य इत्यनुमानात्। 'इदं सर्वमसृजत' 'ऋचो यजूंषि सामानि च' इति श्रुत्या वेदस्यापौरुषेयत्वे सिद्धे निरतिशयाप्रतिहतेश्वरविज्ञान-मूलकत्वेनैव वेदस्य प्रामाण्यम्, न स्वत इति वक्तुं शक्यम्, तथापि पूर्वसिद्धस्य वेदस्योच्चार्यमाणत्वरूपपौरुषेयत्वसाधने सिद्ध-साधनात्। प्रमाणान्तरेणार्थमुपलभ्य रचितत्वरूपपौरुषेयत्वसाधनं तु धर्माधर्मयोः प्रमाणान्तरायोग्यतया बाधितम्। न च स्वाभाविक-ज्ञानमादायेशरचितत्वं साध्यम्, ईशस्य विधूताखिलकार्यकारण-परिकरत्वेनास्यापि बाधात्। तस्माद्धानपूर्वकत्वात् स्वत एवार्थावबोधादपौरुषेयत्वमेव 'विरूपनित्यया वाचा' इति श्रुतेः।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या ततः सर्वाः प्रवृत्तयः।।

इति स्मृतेश्चेति भावः।।

इति वेदस्यापौरुषेयत्वनिरूपणम्।।१९।।

## अथ वेदस्य ब्रह्मपारतन्त्र्यम्

भवत्या निश्वासः सुरधुनि ऋचः सामयजुषी
तथाथर्वा सर्वा गिर उत सुवक्तुं यदिह तत्।
त्वमेवाप्या योगैरपि सुकृतजालैर्भगवती
त्रयाणां लोकानां गतय इह जाता त्रिपथगा।।२०।।

**पदच्छेदः** – भवत्याः निस्-श्वासः सुरधुनि! ऋचः सामयजुषी, तथा अथर्वा सर्वाः गिरः उत सुवक्तुम् यद् इह तत् । त्वम् एव आप्या

योगैः अपि सु-कृत-जालैः भगवती, त्रयाणाम् लोकानाम् गतय इह जाता त्रिपथगा।।

**अन्वयः-** *भो सुरधुनि! ऋचः सामयजुषी तथा अथर्वा सुवक्तुं यद् इह तत् सर्वाः गिरः भवत्याः निश्श्वासः। योगैः सुकृतजालैः अपि भगवती त्वम् एव आप्या। त्रयाणां लोकानां गतये त्वं त्रिपथगा इह जाता।*

भावार्थ – हे सुरधुनि! ऋक्, यजुः, साम, अथर्व रूपी श्रुतिवाक् तथा जो भी सुवचन यहाँ हैं वे सभी तुम्हारे निश्श्वास हैं। तुम ही योग तथा सुकृतों से प्राप्य हो। तुम ही सभी लोकों की गति के लिए त्रिपथगा होती हो।

**ग.ल.व्याख्या- भवत्य इति।। भो सुरधुनि! यं सुवक्तुं सर्वा ऋगाद्या गिरः भवत्या निःश्वासस्तत् त्वमेव योगैः सुकृतैरपि च प्राप्या। भगवती त्वं त्रयाणां लोकानां गतये त्रिपथगासीत्यन्वयः।**

**'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इतिहासपुराणम्।' 'तस्मै वेदान् पुराणानि दत्तवानग्रजन्मने' इत्यादिश्रुतिस्मृतिवाक्यात् ब्रह्मण एव वेदपुराणादिकर्तृत्वं, व्यासस्य तु विभज्य सङ्क्षेपकत्वमात्रमिति भावः।**

**अयं निष्कर्षः-कर्तृत्वमिह नार्थमुपलभ्य रचयितृत्वं वेदस्य सापेक्षत्वलक्षणपौरुषेयत्वापातात्। नाप्युच्चरियितृत्वम्, अध्यापकसाधारण्यप्रसङ्गात्, किन्तु ब्रह्मस्वतन्त्रमप्यध्येतॄणां पुरुषार्थसिद्धये नियतक्रमस्वराद्यपेक्षमाणः, पूर्वकल्पेषु स्वकृतेनैव नियतेन क्रमादिना विशिष्टान् वर्णान् करोति सर्गादौ भगवान्, 'धाता यथापूर्वमकल्पयद्' इति स्मृतेः। एतदेवाध्यापकविलक्षणं ब्रह्मणो वेदकर्तृत्वं यदन्यदीयक्रमाद्यनपेक्षणेन पूर्वमपि स्वकृतेनैव क्रमेण विशिष्टेषु वैदिकवर्णेषु कर्तृत्वम्। तथा चापौरुषेयत्वं वेदस्य, न पुरुषप्रणीतत्वाभावः,**

किं तु स्वतन्त्रेणार्थमुपलभ्य तेन हेतुना विरचितवर्णपदानुपूर्वीविशेष-रूपसन्दर्भत्वं यत्पौरुषेयत्वं तदभाव एवेत्यधिकमस्मत्कृताद्वैत-वादावल्ल्याम्।।

इति वेदस्य ब्रह्मपारतन्त्र्यम्।।२०।।

## अथ प्रपञ्चमिथ्यात्वप्रकरणम्

**भवत्यां सत्यात्माऽद्वयसुखघनाब्धौ त्रिजगती**
**विभातीयं फेनोद्गम इव विरिञ्च्यादिकगणः।**
**सदुल्लोलः संस्कृत्युदयवशतः स्वप्नधिषणा**
**यथाज्ञानाद् गङ्गे त्वमसि शरणं शर्मकरणम् ।।२१।।**

**पदच्छेदः -** भवत्याम् सत्य-आत्मा अद्वय-सुख-घन-अब्धः त्रि-जगती, वि-भाति इयम् फेन-उद्गमः इव विरिञ्च्य-आदिक-गणः। सद्-उल्लोल; संस्कृति-उदय-वशतः स्वप्न-धिषणा, यथा अज्ञानाद् गङ्गे त्वम् असि शरणम् शर्म-करणम्।।

**अन्वयः-** *भो गङ्गे! सत्यात्माऽद्वयसुखघनाब्धौ भवत्याम् इयं त्रिजगती विरञ्च्यादिकगणश्च फेनोद्गमः इव (तथैव) विभाति यथा संस्कृत्युदयवशतः अज्ञानात् स्वप्नधिषणा सदुल्लोलः। (अतः) त्वम् (एव) शर्मकरणं शरणम्।*

**भावार्थ –** हे गङ्गे ! जिस प्रकार संस्कारों के कारण सद् ब्रह्म तरङ्ग स्वप्न में विभिन्न प्रकार की बुद्धि के रूप में प्रतीत होता है, ठीक उसी प्रकार सत्यस्वरूप अद्वैत सुख समुद्र रूपी तुममें यह त्रिजगती तथा ब्रह्मादिकगण फेन की तरह उद्भूत होते हैं।

ग.ल.व्याख्या- भवत्यामिति। भो गङ्गे! सत्यात्माऽद्वयसुख-समुद्ररूपायां भवत्याम् इयं त्रिजगती विरञ्च्यादिकगणश्च फेनोद्गम इव विभाति। यथाज्ञानात् संस्कारोदयवशात् स्वप्नधिषणा-सदुल्लोलः सद्ब्रह्मतरङ्गस्तद्वत्। अतः सर्वाधिष्ठानसद्ब्रह्माभिन्ना त्वमेव शर्मकरणं शरणमित्यन्वयः।

अयं भावः—यद्यपि प्रपञ्चः पारमार्थिकः, मिथ्यात्वे प्रमाणा-नुपलम्भात्, 'यथातथ्यतोऽर्थान् व्यदधाद्' इत्यादिसत्यत्वश्रुतेश्च। यदि च मिथ्यैवायं द्वैतप्रपञ्चस्तदा तद्विषयप्रत्यक्षादेरप्रमाण्यात् तदुपजीवककर्मकाण्डज्ञानकाण्डयोरप्यप्रामाण्यात् स्वर्गापवर्गार्थं प्रवृत्त्यनुपपत्तिस्तस्मान्न मिथ्येति वक्तुं शक्यम्, तथापि 'अथात आदेशो नेति नेति' 'नह्येतस्मादिति नेत्यन्यपरमस्ति' 'अतोऽन्यदार्त्त-मिन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनम्' इत्यादिश्रुतेः। प्रपञ्चो मिथ्या दृश्यत्वात् स्वप्नवत् शुक्तिरजतादिवच्चेत्याद्यनु-मानाच्च मिथ्यैव। मिथ्यात्वेऽपि तस्य तद्विषयज्ञानस्य श्रुतेः परमार्थबोधाद् व्यावहारिकप्रामाण्याभ्युपगमात् तदुपजीवकधर्म-ब्रह्मतत्त्वावेदकप्रामाण्याक्षतेः। न वा सत्यत्वश्रुतिविरोधस्तस्या-लौकिकपरमार्थाभिप्रायत्वात्। न च मिथ्यात्वानुमाने स्व-बाधकाभिमताबाध्यदोषप्रयुक्तभानविषयत्वमुपाधिः, लाघवाद् गृहीतव्याप्तिकेन दृश्यत्वेन पक्षे मिथ्यात्वनिश्चयादुपाधिस्तत्र साध्याव्यापकत्वनिश्चयात्।।

इति प्रपञ्चमिथ्यात्वप्रकरणम्। २१।।

## अथ अनिर्वाच्यख्यातिप्रकरणम्

**यदीयानिर्वाच्यामभिदधति चाख्यातिमपरे**
**ऽन्यथाख्यातिं *चात्मैकमतिमपि तां शून्यमितरे[38]।**
**परं [39]भ्रान्तास्त्वं सा सकलविषयाधिष्ठितपदा[40]**
**चिदानन्दा गङ्गे श्रुतिगिरिगता त्वं विजयसे।।२२।।**

**पदच्छेदः** - यदीय-अनिर्वाच्याम् अभि-दधति च अख्यातिम् अपरे, अन्यथा-ख्यातिम् च आत्म-एक-मतिम् अपि ताम् शून्यम् इतरे। परम् भ्रान्ताः त्वम् सा सकल-विषय-अधिष्ठित-पदा, चिद्-आनन्दा गङ्गे श्रुति-गिरि-गता त्वम् वि-जयसे।

**अन्वयः**- *भो गङ्गे! यदीयानिर्वाच्याम् अपरे अख्यातिम् (पुनः अपरे) अन्यथाख्यातिम्, इतरे आत्मैकमतिम् अभिदधति। अपि तथा परं भ्रान्ताः तां शून्यं वदन्ति। सा त्वं सकलविषयाधिष्ठितपदा श्रुतिगिरिगता चिदानन्दा त्वं विजयसे।*

**भावार्थ** – हे गङ्गे! जिसकी अनिर्वाच्य माया को कुछ लोग अख्याति, कुछ अन्यथाख्याति तथा कुछ आत्मख्याति मानते हैं तथा इसी प्रकार अन्य भ्रान्त लोग उसे शून्य मानते हैं, ऐसी तुम सभी विषयों का एकमात्र अधिष्ठान होती हुई, श्रुतिवचनों से ज्ञेय हो, चिदानन्दरूपा हो! तुम्हारी जय हो।

**ग.ल.व्याख्या- यदीयेति। भो गङ्गे यदीयामनिर्वाच्यां मायामर्थात् भ्रमरूपाम् अपरे मीमांसकाः अख्यातिं विशिष्ट-ज्ञानाभावम् अर्थात् ग्रहस्मरणात्मकज्ञानाद्द्वयरूपां वदन्ति। च पुनः अपरे नैयायिकाः अन्यथा व्यधिकरणधर्मप्रकारिकां ख्यातिं ज्ञानं वदन्ति। इतरे योगाचारादयः आत्मैकस्यात्ममात्रस्य मतिम् आत्म-ख्यातिरूपां वदन्ति। अपि तथा परं भ्रान्ताः माध्यमिकाः शून्यम् अर्थात् असत्त्वख्यातिं वदन्ति। सा त्वं सकलविषयाधिष्ठितपदा**

सकलकल्पनाधिष्ठानं चिदानन्दा वेदान्तवचनगता विजस इत्यन्वयः।

अयं भावः-शुक्तिरजतादिविभ्रमस्थले इदमिति पुरोवर्तिनो ग्रहणं रजतमिति रजतस्मरणं तयोश्च ग्रहणस्मरणयोस्तद्विषययोश्चा-संसर्गाग्रहाद् विशिष्टव्यवहार इत्यख्यातिरिति मीमांसकास्तन्न सम्यक्, रजतत्वप्रकारकपुरोवर्तिविशेष्यकप्रवृत्तिं प्रति तादृशज्ञानत्वेन हेतुतायाः सत्यरजतप्रवृत्तौ क्लृप्ताया इह बाधेन हेत्वन्तरकल्पने गौरवात्। एवं देशान्तरवर्तिरजतस्य पुरोवर्तित्वेन भानमित्यन्यथाख्यातिरिति नैयायिकमतमपि न सम्यक्, असन्निकृष्टरजतस्य प्रत्यक्षायोगेन ज्ञानलक्षणासान्निकर्षान्तरकल्पने गौरवात्, तादात्म्य-स्यात्यन्ताप्रसिद्धतया तस्य ज्ञानलक्षणयापि भानासम्भवात्। एवं नात्मख्यातिः, आत्मभिन्नस्य भानेऽतिप्रसङ्गात्। नाप्यसत्ख्यातिः, असतो भानायोगात्। निर्विषयस्य च भानस्यासम्भवात्। तस्माद-निर्वाच्यमेव तत्र रजततत्सम्बन्धादिकं भाति। न च प्रातिभासिक-तावत्कल्पनापेक्षया सन्निकर्षकल्पन एव लाघवमिति शङ्क्यम्, रजताभाववद्विशेष्यकरजतत्वप्रकारकज्ञानत्वापेक्षया रजताभाव-वन्निष्ठरजतत्वस्यैव दोषजन्यतावच्छेदकत्वे लाघवात्।

इत्यनिर्वाच्यख्यातिप्रकरणम्।।२२।।

## अथ स्वरूपभेदनिरासप्रकरणम्

न नानेहास्तीति श्रुतिवचनजातैर्भगवती
निरस्यैवाभासि स्वयमखिलभेदं सुरधुनि।
परात्मैका नित्या चितिसुखसमृद्धा[1] त्वमसि तत्
त्वदीयं मोक्षार्थं श्रयति जनता जीवनपदम्।।२३।।

**पदच्छेदः** – न नाना इह अस्ति इति श्रुति–वचन–जातैः भगवती, निरस्य एव आभासि स्वयम् अखिल–भेदम् सुरधुनि। परा आत्मा एका नित्या चिति–सुख–समृद्धा त्वम् असि तत्, त्वदीयम् मोक्षा–अर्थम् श्रयति जनता जीवनपदम्।।

**अन्वयः**- *(भो) सुरधुनि! इह नाना नास्ति इति श्रुतिवचनजातैः भेदं निरस्य एव भगवती त्वं स्वयम् आभासि। त्वम् एका परमात्मा चितिसुखसमृद्धा असि। तत् जनता मोक्षार्थं त्वदीयं जीवनपदं श्रयति।*

**भावार्थ** – हे सुरधुनि! 'नेह नानास्ति किञ्चन' इस श्रुतिवाक्य से भेद का सर्वथा निरास करके तुम ही आभासित होती हो। तुम ही सच्चित्, सुखस्वरूप परमात्मा हो। इसीलिए जनता अपने मोक्ष के लिए तुम्हारे जलस्वरूप का सेवन करती है।

**ग.ल.व्याख्या- न नानेति। भो सुरधुनि! 'इह नाना नास्ति' इति श्रुतिवचनजातैर्भेदं निरस्यैव भगवती त्वं स्वयं भासि। अतस्त्वं परमात्मा सच्चित्सुखरूपा। तत्तत्कारणात् जनता जनसमूहः मोक्षार्थं त्वदीयं जीवनपदं जीवनस्थानं जलस्वरूपं च सेवत इत्यन्वयः।**

**अयं भावः-यद्यपि भेदो द्विविधः। एकः पदार्थानामन्योन्य-सामानाधिकरण्यायोग्यतात्मकः यथा रजतादेः शुक्तिकादिसंसर्गा-योग्यतादिलक्षणः। स च पदार्थधर्म एव। द्वितीयः पदार्थानाम-सङ्कररूपः। स तु पदार्थरूपावगतिरेव। तत्राद्यस्य न, धर्मिप्रतियोग्य-पेक्षारूपरसादिस्वरूपस्यैव भेदत्वात्। तस्य च प्रतियोग्याद्य-नपेक्षत्वात्। एवसङ्करोऽपि रूपस्य रूपात्मनैव रसासिद्धः। स्वरूपस्यासङ्करात्मनैवावभासनात् तृतीयानपेक्षणादिति साङ्ख्याः। न भेदो घटादिस्वरूपः, शुक्लो घट इतिवद् भिन्नो घट इति घटधर्मत्वेन भेदस्य प्रतिभासात्। घटादिस्वरूपत्वे भेदघटादिशब्दानां पर्यायतापत्तेश्च। तस्माद् धर्मिप्रतियोगिसापेक्षो भेदोऽर्थान्तरमेव।**

स च पञ्चविधो जीवेश्वरयोर्जीवजगतां परस्परं जीवानां तथा परस्परं जगतामीशजगतां चेति भेदादिति कणभक्षाक्षचरणतनयाः। सर्वथा कर्तृकर्मादिभावान्यथानुपपत्तेः सृष्टिश्रुतेर्द्वा सुपर्णेत्यादिश्रुतेश्च प्रामाणिक एवेति वक्तुं शक्यम्, तथापि 'नेह नानास्ति किञ्चन', 'मृत्योः स मृत्युमाप्नोति', 'य इह नानेव पश्यति' इत्यादिश्रुति-विरोधात् पञ्चविधोऽपि भेदोऽप्रामाणिक एव। न च कर्तृकर्मादि-भावानुपपत्तिः, यावत् प्रपञ्चाभासमनिर्वाच्यभेदस्याभीष्टत्वात्। द्वा सुपर्णेत्यादिश्रुतयस्तु प्रत्यक्षसिद्धभेदस्यानुवादाः। न चेशधर्मिक-जीवभेदस्याप्राप्त्याऽननुवादत्वं जीव ईशभेदस्य प्रत्यक्षसिद्धतया तदन्यथानुपपत्तिसिद्धेशधर्मिकजीवभेदस्यापि प्रत्यक्षसिद्धतुल्य-कक्षतया तद्बोधकश्रुतेरनुवादकत्वोपपत्तेः। न च द्वयोः प्रणयन्तीतिवत् प्राप्तविलक्षणपरत्वं षड्विंशतिरित्येव ब्रूयादितिवत् प्रतिप्रसवार्थत्वं वा शङ्क्यम्। भेदद्वये मानाभावात्। अद्वैतश्रुत्य-पेक्षया हीनबलत्वेन प्रतिप्रसवयोगाच्चेति सङ्क्षेपः।

इति स्वरूपभेदनिरासप्रकरणम्।।२३।।

## अथ भेदनिरासप्रकरणम्

सदा त्वं सर्वज्ञा सकलसुरवर्यार्चितपदाऽ-
नपेक्ष्यैवाशेषस्थितिजननभङ्गैकविभवा।
न भिन्ना नाभिन्ना कथमपि कुतश्चित् परशिवे
नमस्कुर्मोऽनन्तां सुरधुनि सुखाय त्रिपथगाम्।।२४।।

पदच्छेदः - सदा त्वम् सर्वज्ञा सकल-सुर-वर्य-अर्चित-पदा, अनपेक्ष्य एव अशेष-स्थित-जनन-भङ्ग-एक-विभवा। न भिन्ना न अभिन्ना

कथम् अपि कुतश्चित् परशिवे, नमस्कुर्मः अनन्ताम् सुरधुनि! सुखाय त्रिपथाम्।।

**अन्वयः-** *भो सुरधुनि! परशिवे! त्वम् सकलसुरवर्यार्चितपदा। अनपेक्ष्य एव सदा अशेषस्थितिजननभङ्गैकविभवा। कथमपि कुतश्चित् न भिन्ना नाप्यभिन्ना। (अतः) अनन्तां त्वां त्रिपथगां सुखाय नमस्कुर्मः।*

**भावार्थ –** हे सुरधुनि! तुम सभी देवताओं से पूजितचरणा हो, तुम विना किसी कारण के ही सभी की स्थिति, उत्पत्ति तथा संहार करने वाली हो। तुम किसी प्रकार से भी कार्य से न सर्वथा भिन्न हो, न ही सर्वथा अभिन्न हो और न ही भेदाभेदविशिष्ट हो। अतः अनन्तस्वरूपा त्रिपथगा हम तुम्हें अपने सुख के लिए प्रणाम करते हैं।

**ग.ल.व्याख्या- सदा त्वमिति। भो सुरधुनि परशिवे! त्वं प्रयोजनमनपेक्ष्यैव अशेषाणां स्थितिः पालनम्, उत्पत्तिः, भङ्गः लयः, एकः विभव ऐश्वर्यं यस्याः सा। त्वं न भिन्ना कार्यात् अद्वैतश्रुतिविरोधात्। नाप्यत्यन्तमभिन्ना कार्यकारणभावानुपपत्तेः। नापि भेदाभेदविशिष्टा विरोधात्। अतोऽनन्ता त्वां सुखाय त्रिपथगां नमस्कुर्म इत्यन्वयः।।**

**अयं भावः–यद्यपि सन् घटः सन् पट इति सदात्मना तावत् सर्वमेकात्मकं प्रतिभाति घटपटादिरूपेणानेकात्मकं चोपलभामहे। ततश्चोभयात्मकत्वानुभवादेकानेकात्मकं जगत्। न च विरोधः, अहिकुण्डलवदवच्छेदकभेदेनाविरोधादिति वक्तुं शक्यम्, तथापि 'सदेव सोम्येदमग्र आसीद्' इति श्रुतिप्रमिताभेदविरोधेन भेदस्यातात्त्विकतयैवोपपत्तौ तात्त्विकत्वे मानाभावान्नावच्छेदकभेदेनापि तौ भेदाभेदौ समसत्ताकौ वक्तुं शक्यौ, अवच्छेदकस्यापि भेदाभेदविकल्पेऽवच्छेदकान्तरापेक्षायामनवस्थानाच्च। तस्मादभेदस्तात्त्विको भेदस्त्वाध्यासिक एव। नानात्वैकत्वमेतावता द्रष्टव्यं**

शास्त्रनिश्चयात्। मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोरिति भारतवचनं तु बुद्धिक्षेत्रज्ञपरम्। भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवदित्यधिकरणेन व्याख्यातप्रायम्। बुद्धिक्षेत्रज्ञयोरीशाभेदेऽप्यब्धितरङ्गवत् कथञ्चिद् भेदादित्यधिकमाकरे।।

इति भेदनिरासप्रकरणम्।।२४।।

## अथ समन्वयप्रकरणम्

वचः श्रौतं व्यासोदितमपि *विचार्याप्यथ च[42] यत्
परं क्षेत्रादिज्ञैः[43] कृतिभिरहमस्मि त्वमिति च।
त्वमेवाहं ज्ञेयं त्वमसि तदिदं भीष्मजननि
जनोद्धारव्यक्तां सततमभिवन्दे भगवतीम्।।२५।।[44]

**पदच्छेदः** - वचः श्रौतम् व्यास-उदितम् अपि विचार्य अपि अथ च यत्, परम् क्षेत्र-आदि-ज्ञैः कृतिभिः अहम् अस्मि त्वम् इति च। त्वम् एव अहम् ज्ञेयम् त्वम् असि तद् अहम् भीष्म-जननि, जन-उद्धार-व्यक्ताम् सततम् अभिवन्दे भगवतीम्।।

**अन्वयः**- *भो भीष्मजननि! व्यासोदितं इदं श्रौतं वचः विचार्य अथापि च यत् क्षेत्रादिज्ञैः कृतिभिः यत् परं - 'त्वम् अहम्' 'अस्मि अहं च त्वमेव' इति ज्ञेयं तत् त्वमेव असि। जनोद्धारव्यक्तां भगवतीं (त्वां) सततम् अभिवन्दे।*

**भावार्थ** – हे भीष्मजननि! 'सदेव सोम्य इदमग्र आसीत्', 'अथातो ब्रह्म जिज्ञासा' इत्यादि श्रुति वाक्यों से तथा 'अथातो ब्रह्मजिज्ञासा' से लेकर 'अनावृत्तिः शब्दाद्' तक व्यासवाक्यों को विचार करके यह सिद्ध होता है कि क्षेत्र, क्षेत्रज्ञ अन्तर्यामी से पर जो परमात्मतत्त्व है, जिसे 'त्वं परमात्मैव अहम्' तथा 'अहं च

त्वमेव' इत्यादि वाक्यों से ज्ञेय कहा गया है, वह तुम्हीं हो। हे भगवती! लोगों के कल्याण के लिए अभिव्यक्तरूपा, मैं सदा तुम्हारा अभिवन्दन करता हूँ।

ग.ल.व्याख्या- वच इति। भो भीष्मजननि! 'सदेव' इत्यादि-श्रुतिवाक्यम्, 'अथातो ब्रह्मजिज्ञासा' इत्यादि 'अनावृत्तिः शब्दाद्' इत्यन्तं व्यासवाक्यं च विचार्य क्षेत्रादिज्ञैः क्षेत्रक्षेत्रज्ञान्तर्यामिविद्भिः कृतिभिर्यत् परं त्रिविधपरिच्छेदशून्यं ब्रह्म विद्यया प्राप्तुं शक्यम्। विद्याप्रकारमाह त्वं परमात्मैवाहम्। अहं च देहेन्द्रियादिसाक्षी त्वमेवेति ज्ञेयम्। प्रत्यगात्मनोऽब्रह्मत्वभ्रमनिवृत्तये ब्रह्मणश्च परोक्षत्वभ्रम-निवृत्तये व्यतिहारेण ज्ञेयम्। तदेवेदमपरोक्षं ब्रह्मतत्त्वं त्वमसि। जनोद्धाराय व्यक्तां भगवतीं त्वां सततमभिवन्द इत्यन्वयः।

अयं भावः-यद्यपि सर्वेऽपि वादिनो द्वैतमेवोपपादयन्ति। अनुभूयतेऽपि तदेव सर्वैः। सर्वसम्मतं चाभ्युपगन्तुं युक्तम्। तथाप्युपक्रमोपसंहारादिना श्रुतेर्व्याससूत्राणां चाद्वैतपरत्वावधारणात् तदेवाभ्युगम्यते। तथा हि छान्दोग्यश्रुतौ 'सदेव सोम्येदमग्र आसीद्' इत्युपक्रम्य 'तत्त्वमसि' इति नवकृत्वोऽभ्यस्य 'आचार्यवान् पुरुषो वेद' इत्यपूर्वयित्वा 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य' इति सफलीकृत्य 'येनाश्रुतं श्रुतं भवति' इत्यर्थवादमुक्त्वा यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिदृष्टान्तैरुपपाद्यै-तदात्म्यमिदं सर्वमित्युपसंहारः स्पष्टः। बृहदारण्यकेऽपि 'आत्म इत्येवोपासीत', 'अत्र ह्येते सर्वे एकं भवन्ति' इत्युपक्रम्य 'स एष नेति नेति' इत्यादिनाऽभ्यस्य 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यपूर्वयित्वा 'अभयं वै जनकप्राप्तोऽसि' 'ब्रह्मैव सन् ब्रह्माप्येति' इति सफलीकृत्य 'तद्यो यो देवानां प्रत्यबुध्यत', 'स एव तदभवद्' इत्यर्थवादमुक्त्वा 'स यथा दुन्दुभेर्हन्यमानस्य' इत्यादिनोपपाद्य 'पूर्णमिदम्' इत्युपसंहारः स्पष्टः। एवं सूत्रेष्वपि। तथा हि तत्र भगवान्

बादरायणः 'अथातो ब्रह्मजिज्ञासा' इति त्रिविधपरिच्छेदशून्यब्रह्मणो मुमुक्षुपुरुषजिज्ञास्यब्रह्मणः किं लक्षणम्, किं प्रमाणमित्याकाङ्क्षायां 'जन्माद्यस्य यत' इति सूत्रेण लक्षणम्, 'शास्त्रयोनित्वाद्' इति सूत्रेण प्रमाणं चोपन्यस्य शास्त्रस्य कार्यपरत्वेन कथं सिद्धपरत्व-मित्याकाङ्क्षायां 'तत्तु समन्वयाद्' इति सूत्रेण कार्यपरत्वनिरासपूर्वकं सिद्धब्रह्मपरत्वं बहुविधानेकन्यायैरुपपाद्य पश्चाद् 'ईक्षतेर्नाशब्दम्' इत्यधिकरणेन जगतः प्रधानकारणकत्वं दूरीकृत्य ब्रह्मण्येव सर्ववेदान्तानाम् गति सामान्यं च प्रतिज्ञाय तदेव गतिसामान्यम् 'आनन्दमयोऽभ्यासाद्' इत्यारभ्य प्रथमद्वितीयतृतीयपादैरन्यार्थत्व-शङ्कानिरसनपूर्वकमुपपाद्य चतुर्थपादे कैश्चिदधिकरणैः प्रधान-स्यासृष्टत्वं प्रपञ्च्य प्रमाणोपन्यसनं, तच्च ब्रह्मणः प्रकृतित्वेन जगतो निमित्तत्वेन च, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि-त्यधिकरणेन व्यवस्थाप्य प्रथमाध्यायं समापयामास। अनन्तरं च द्वितीये प्रथमपादेन साङ्ख्ययोगवैशेषिकनैयायिकबौद्धत्रयक्ष-पणकशैवपाञ्चरात्राणां बहुलतरासारतरयुक्त्याभासकल्पितत्वं कैश्चिदधिकरणैः प्रदर्श्य तटस्थेश्वरं च प्रमाणयुक्तिशून्यतया प्रतिचिक्षेप। ततस्तृतीयपादेन भूतभोक्तृश्रुतीनां, चतुर्थेन लिङ्गदेह-श्रुतीनां च परस्परविरोधं सम्यगपाचकार। एवं द्वितीयाध्यायेनाद्वय-समन्वयविरोधं प्रतिक्षिप्य तृतीयाध्याये प्रथमपादे संसारिणाम् इहामुत्र च गत्यागतिनिरूपणपूर्वकं संसारदोषविवेचनेन वैराग्य-मधिकारविशेषणं दृढीकृत्य तदनु द्वितीयपादेन वाक्यार्थज्ञानाङ्गत्वेन जाग्रदाद्यवस्थाभ्यो विविच्य त्वंपदार्थं प्रदर्श्य तत्पदार्थमपि सकलद्वैतप्रपञ्चनिरासपूर्वकं प्रदर्शयामास। ततस्तृतीयपादेन विद्याभेदाभेदाभ्यां गुणोपसंहारानुपसंहारौ प्रदर्शयन् विधिरूपावान्तर-वाक्यस्य निषेधरूपावान्तरवाक्यस्य च प्रमाणत्वं न्यायेन प्रदर्श्य ततश्च चतुर्थपादेन पुरुषार्थोऽतः शब्दादिति बादरायण इति

प्रथमाधिकरणेन ब्रह्मज्ञानस्य कर्मनिरपेक्षस्यैव मोक्षसाधनत्वं प्रसाध्य तस्य चोत्पत्तावन्तरङ्गसाधनं संन्यासशान्त्यादिकं, बहिरङ्गसाधनं यज्ञादिकं च प्रदर्श्य ज्ञानसाधनस्यानुष्ठितस्यासति प्रतिबन्धके इहैव फले सति तस्मिन्नमुत्र चेत्यन्तिमाधिकरणेनोक्त्वा तृतीयाध्यायं समापयामास। ततश्चतुर्थे प्रथमपादे आवृत्तिरसकृदुपदेशादित्यधिकरणेन ब्रह्मसाक्षात्कारपर्यन्तं श्रवणाद्यावृत्तिं कर्तव्यतया प्रदर्श्य आत्मेति तूपगच्छन्ति ग्राहयन्ति चेत्यधिकरणेन वाक्यार्थं च जीवब्रह्माभेदं सम्यक् प्रदर्श्य ततः सगुणोपासकस्य क्रममुक्तिमभिधाय द्वितीयपादेन पुनस्तस्यैवोत्क्रान्तिकारमुपवर्ण्य तदनु तृतीयेन उत्तरमार्गचिन्तापूर्वकं तस्यैव कार्यब्रह्मप्राप्तिं प्रदर्श्य निर्गुणब्रह्मविदश्च गत्युत्क्रान्तिं प्रतिषिध्य ततश्चतुर्थेन निर्गुणविद्याफलं ब्रह्मात्मनाऽवस्थानमुपवर्ण्य सगुणविद्याफलं च ब्रह्मलोके ऐश्वर्यमुपपाद्य तेषां सगुणविदामन्ते अनावृत्तिः शब्दादिति ब्रह्मोपदेशेन मुक्तिं प्रदर्श्य विरराम। तथा च तद्विरोधेन बहूक्तमपि द्वैतं नाभ्युपगन्तुं युक्तं शतमप्यन्धो मां न पश्यतीति न्यायादिति सङ्क्षेपः।

इति समन्वयप्रकरणम्।।२५।।

## अथ ऐक्यात्मनिरूपणप्रकरणम्

सदा संविद्रूपाऽद्वयसुखघनात्मा भगवती
त्वमत्र क्षेत्रज्ञा बहुविधतनूभिर्बहुविधा
विभास्युद्धाराय स्वयमहह तोयस्य वपुषा
पुनासि त्वं गङ्गे निखिलजनतां पुण्यनिवहे[45]।।२६।।

**पदच्छेदः** - सदा संविद्-रूपा अद्वय-सुख-घन-आत्मा भगवती,

त्वम् अत्र क्षेत्रज्ञा बहुविध-तनूभिः बहुविधा। विभासि उद्धाराय स्वयम् अहह तोयस्य वपुषा, पुनासि त्वम् गङ्गे ! निखिल-जनताम् पुण्यनिवहे।।

**अन्वयः-** *हे गङ्गे! सदा संविद्रूपा अद्वयसुखघना भगवती त्वं क्षेत्रयोगात् क्षेत्रज्ञा सती बहुविध-तनूभिः बहुविधा विभासि। हे पुण्यचरिते! अहह तोयस्य वपुषा उद्धाराय निखिलजनतां पुनासि।*

भावार्थ – हे गङ्गे ! तुम सदा संवित् स्वरूपा हो, अद्वैतसुखरूपा हो। तुम क्षेत्र के योग से क्षेत्रज्ञा हो। अनेक प्रकार के शरीरों जैसे देवता मनुष्य आदि के शरीरों से बहुत प्रकार की हो जाती हो। हे पुण्यचरिते ! तुम जनसमूह के उद्धार के लिए जलीय शरीर धारण कर लोगों को पवित्र करती हो।

ग.ल.व्याख्या- सदा संविदिति। भो गङ्गे! सदा संविद्रूपाऽ-द्वयघना सुखात्मरूपा भगवती त्वं क्षेत्रयोगात् क्षेत्रज्ञा सती बहुविधतनूभिः देवनरादिशरीरभेदैर्बहुविधा भिन्नाभासिनस्स्वतो-ऽभिन्ना प्रमाणाभावात्। किं च भो पुण्यनिवहे! तोयस्य वपुषा उद्धाराय मोक्षाय निखिलजनतां समस्तमनुष्यादिसमूहं पुनासीत्यन्वयः। स्वयं पुण्यरूपतां गृहीत्वैवान्यान् पुण्यान् करोषीति यावत्।

अयं भावः-यद्यपि प्रत्यक्षेण त्वमहमसाविति शरीरभेदेनात्मनो भेदावगमात् 'सर्व एत आत्मनो व्युच्चरन्ति' इति श्रुतेः प्रतिशरीर-मात्मनो भेदं विना प्रति शरीरव्यवस्थितसुखदुःखादिभोगस्यानु-पपत्तेश्च प्रतिशरीरमात्मनो भिन्ना एवेति वक्तुं शक्यम्, तथापि 'एको देवः सर्वभूतेषु गूढ' इत्यादिश्रुतिविरोधेन प्रत्यक्षस्याप्रमाणत्वात् सर्व एत आत्मान इति श्रुतेस्तु भेदोपमर्देनैकात्म्यप्रतिपादनाय भेदानुवादत्वात् भोगव्यवस्थाया अन्तःकरणभेदेनोपपत्तेर्न प्रतिशरीर-मात्मानो भिन्ना इति भावः।।

इति ऐक्यात्मनिरूपणप्रकरणम्।।२६।।

## अथ स्वप्रकाशत्वप्रकरणम्

समुत्थं मायायां सरसि जगतीपङ्कजमिदं
यदस्मिन् सौरभ्यं सुकृतमुखतोऽथो सुभगता[16]
महाशापत्रं यद्विकचयसि चिद्भानुरनिशं
तदेतत्ते कृत्यं सुरसरिदपूर्वं विजयते।।२७।।

**पदच्छेदः** - समुत्थम् मायायाम् सरसि जगती-पङ्कजम् इदम्, यद् अस्मिन् सौभाग्यम् सुकृत-मुख-सौरभ्यम् अतुलम्। महा-आशा-पत्रम् यद् विकचयसि चिद्-भानुः अनिशम्, तद् एतत् ते कृत्यम् सुर-सरित्! अपूर्वम् विजयते।।

**अन्वयः**- *भो सुरसरित्! एतत् ते अपूर्वम् कृत्यम् विजयते। एतत् मायायां सरसि समुत्थम् इदं जगती-पङ्कजम् यद् अस्मिन् सुभगता अतुलं सुकृतमुखतः सौरभ्यं महाशापत्रं तत् कमलं त्वं चिद्भानुः अनिशं विकचयसि।*

**भावार्थ** – हे सुरसरित्! तुम्हारा यह अपूर्व कृत्य सदा विजयी हो। मायारूपी सरोवर में खिलने वाला जगत् रूपी यह जो पङ्कज है, वह सुकृतादि अतुल सौरभ वाला तथा महाशा रूपी पत्रों वाला कमल है। इसे स्वयंप्रकाश चिन्मय-सूर्य रूप में तुम स्वयं विकसित एवं प्रकाशित करती हो।

**ग.ल.व्याख्या- समुत्थमिति। भो सुरसरित्! एतत् ते अपूर्वं कृत्यं विजयते। एतत् किं (?) मायायां सरसि समुत्थम् इदं जगतीपङ्कजं यच्चास्मिन् सुकृतादिसौरभ्यम् अथ सौदर्यप्रियत्वं महेच्छापत्रं तत्कमलं चिद्भानुस्त्वमनिशं विकचयसि विकसयसि प्रकाशयसीति यावत्।**

**प्रतिभासमात्रशरीरायां मायायां सरसि व्यवहारक्षमं जगत्कमलं यच्चासोपादेयं रूपं प्रतिभानं चानिशं तत्स्वप्रकाशत्वदधीनमेव।**

यथा प्रसिद्धकमलस्य प्रसिद्धसरसिजातस्य विकसनसौगन्ध्यादि स्वप्रकाशसूर्याधीनं तद्वदिति भावः।

यद्यथात्मा न स्वप्रकाशः, मामहं जानामीत्यहं प्रत्यय-ग्राह्यत्वादिति वक्तुं शक्यम्, तथापि सुप्तोत्थितस्य सुखमहम-स्वाप्समिति परामर्शानुमितसौषुप्तानुभवात् आत्मा स्वप्रकाशः, प्रकाशाव्यभिचारित्वात् प्रदीपादिवदित्यनुमानात् 'आत्मैवास्य ज्योतिर्भवति' इत्यादिश्रुतेश्च स्वप्रकाश आत्मा। मामहं जानामीति प्रत्यक्षं तु स्वप्ने शिरःछेदादिप्रतीतिवद् भ्रान्तिरेव। स्वप्रकाशत्वं चानन्यनिमित्तप्रकाशत्वम्। तेन प्रदीपादेः संवेद्यत्वेऽपि न साध्य-विकलता, न वा विद्यमानस्य कदाचिदनुपलम्भेऽपि साधनविकलता। न च तर्ह्यात्मा संवेद्यः, प्रकाशाव्यभिचारित्वात् प्रदीपवदित्येवानु-मीयतामिति शङ्क्यम्, अप्रयोजकत्वात्। न खलु प्रकाशा-व्यभिचारित्वात् प्रदीपादेः संवेद्यत्वम्, किन्त्वनात्मत्वात्। न च तुल्यमप्रयोजकत्वं प्रदीपादेर्न प्रकाशाव्यभिचारित्वात् स्वयंप्रकाशत्वं, किन्तु तेजोद्रव्यादिति शङ्क्यम्, पार्थिवस्यापि पद्मरागादेः स्वत एव तमोविरोधित्वदर्शनादिति सङ्क्षेपः।।

इति स्वप्रकाशत्वप्रकरणम्।।२७।।

## अथ साक्षिस्वरूपनिरूपणप्रकरणम्

त्वमेवासि द्रष्ट्री निखिलजगतोऽस्यावधिरनु-
प्रयाताऽनक्षापि त्वमसि परमानन्दलहरी।
त्वयेदं[47] साक्षिण्या स्फुरति निखिलं साक्ष्यमथ ते
परं रूपं को वा गमयितुमलं हि श्रुतिमृते।।२८।।[48]

**पदच्छेदः** – त्वम् एव असि द्रष्ट्री निखिल–जगतः अस्य अवधिः अनुप्रयाता अनक्षा अपि त्वम् असि परम–आनन्द–लहरी। त्वया इदं साक्षिण्या स्फुरति निखिलम् साक्ष्यम् अथ ते, परम् रूपम् कः वा गमयितुम् अलम् हि श्रुतिम् ऋते।।

**अन्वयः**– *भो सुरधुनि! अनक्षा अपि परमानन्दलहरी निखिलजगतः द्रष्ट्री त्वमेवासि। अस्य अवधिः अनुप्रयाता त्वमसि। त्वया साक्षिण्या निखिलम् इदं जगत् साक्ष्यं स्फुरति। ते परं रूपं श्रुतिम् ऋते अवगमयितुं को वा अलम्।*

**भावार्थ** – हे सुरधुनि! 'पश्यति अचक्षुः' इत्यादि श्रुतिवचनों के अनुसार तुम चक्षुरहित होकर भी सम्पूर्ण जगत् को देखने वाली हो। इस जगत् की अवधि भी तुम्हीं हो। साक्षी के रूप में तुम्हारे द्वारा ही यह जगत् दृष्टियुक्त होकर स्फुरित हो रहा है। तुम्हारे परं स्वरूप को श्रुति के अतिरिक्त कौन जान सकता है।

**ग.ल.व्याख्या**- **त्वमेवासीति। भो सुरधुनि! पश्यत्यचक्षुरित्यादिश्रुतिप्रमाणादनक्षापि चक्षुरादीन्द्रियरहितापि परमानन्दलहरी ज्ञानावत्वविवक्षया निखिलजगतो द्रष्ट्री पुरुषरूपापि त्वमेवासि। तथास्यागमापायिजगतोऽवधिरनुगता च त्वमसि। त्वया साक्षिण्या ज्ञानरूपया निखिलमिदं साक्षं स्फुरति। ते परं रूपं श्रुतिमृते वागमयितुं बोधयितुं को वा अलं समर्थ इत्यन्वयः।**

**अत्र दृष्ट्रीत्यनेन दृग्दृश्यान्वयव्यतिरेकः। त्वयेदं साक्षिण्येत्यनेन साक्षिसाक्ष्यान्वयव्यतिरेकः। अवधिरित्यनेनागमापायितदवध्यन्वयव्यतिरेकः। परमानन्दलहरीत्यनेन दुःखिप्रेमास्पदान्वयव्यतिरेकः। अनुप्रयातेत्यनेनानुवृत्तव्यावृत्तान्वयव्यतिरेकश्च। पञ्चमस्तद्बोधोपायः सूचितः। तत्र दृशि दृश्यानामन्वयेनारोपिततादात्म्येन व्यतिरेको मिथ्यात्वं दृग्दृश्यान्वयव्यतिरेकः। एवं साक्षिणि साक्ष्यस्यान्वयेन व्यतिरेकः। तथागमापायिनस्तदवधौ बाधकधी-**

विषयेऽन्वयेन व्यतिरेकः। तथा दुःखिनः परमप्रेमास्पदेऽन्वयेन व्यतिरेकः। तथाऽनुवृत्ते व्यावृत्तस्यान्वयेन व्यतिरेक इति क्रमशो बोध्यः। एवंविधान्वयव्यतिरेकगम्यं यत्तत्त्वं ब्रह्मकूटस्थसाक्षि-शब्दाद्यभिधेयं सा त्वमसीति यावत्।

अयं भावः–यद्यपि प्रमात्रादिचतुष्टयेनैव सर्वव्यवहारसम्भवात्, साक्षिणं विनाऽनुपपत्त्यभावात् न प्रमातृव्यतिरिक्तः साक्षी स्वीकर्तुमुचितस्तथापि प्रमातृव्यतिरिक्तसाक्षी परैरनिच्छद्भिरप्य-वश्यमभ्युपगन्तव्य इति भावः।।

इति साक्षिस्वरूपनिरूपणप्रकरणम्।।२८।।

## अथ सर्वगतप्रकरणम्

वियद्वद् व्याप्येदं निखिलजगदस्येव सततं
ह्यनन्ताखण्डात्मा निरवधि[४७]चिदानन्दजलधिः।
अशेषास्त्वय्येवामरधुनि विशेषा अविरतं
लभन्ते संस्थानं त्वमिति परमात्मैव जननि।।२९।।

**पदच्छेदः** - वियद्वद् व्याप्य इदम् निखिल-जगद् असि एव सततम्, हि अनन्त-अखण्ड-आत्मा निरवधि-चिदानन्द-जलधिः। अशेषाः त्वयि एव अमरधुनि! विशेषा अविरतम्, लभन्ते संस्थानम् त्वम् इति परम-आत्मा एव जननि।।

**अन्वयः**- *भो सुरधुनि! अनन्ताखण्डात्मा निरवधिचिदानन्दजलधिः त्वम् इदं निखिलजगत् वियद्वद् व्याप्य (तिष्ठसि)। अशेषा विशेषाः त्वयि एव संस्थानं लभन्ते। अतः हे जननि! त्वं परमात्मैव असि।*

**भावार्थ** – हे सुरधुनि! तुम ही अनन्त अखण्ड आत्मस्वरूप असीम

चिदानन्द समुद्र हो जो इस सम्पूर्ण जगत् को आकाश की तरह व्याप्त करके स्थित हो। पृथिव्यादि समस्त विशेष तुममें ही आश्रित हैं। अतः हे जननि! तुम परमात्मा हो।

ग.ल.व्याख्या- वियद्वदिति। भो सुरधुनि! अनन्ताखण्डात्मा निरवधिसदानन्दजलधिस्त्वम् इदं निखिलं जगत् वियद्वत् आकाशवद् व्याप्य तिष्ठसि। अतः अशेषा विशेषाः पृथिव्यादयस्त्वयैव स्थितिं लभन्त इति हेतोः हे जननि! त्वं परमात्मैवासीत्यन्वयः।

अयं भावः-यद्यप्युत्क्रान्तिगत्यादिमत्वात् परिच्छिन्न एवात्मा न सर्वगतः। ततश्च परिच्छिन्नत्वे सति मध्यमपरिमाणस्य सावयवत्वादिदोषप्रसङ्गात्, आत्मनश्च नित्यत्वात् अणुपरिमाण एव बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः 'स विज्ञेय' इत्यादिश्रुतेः। 'ज्यायानाकाशात्' 'आकाशवत् सर्वगतश्च' इत्यादि श्रुतयस्तु परमात्मविषया इति वक्तुं शक्यम्, तथापि आकाशवन्निरवयवद्रव्यत्वेनाकाशवत् सर्वगत एवात्मा। न च परमाणुष्वनैकान्तिकता परमाणूनामप्रामाणिकत्वात्, किञ्च तत्त्वमस्याद्यभेदश्रुतेः आत्मैवाधस्तदात्मोपरिष्टादित्यादि साक्षात् सर्वगतत्वश्रुतेश्चात्मा सर्वगतः, बालाग्रश्रुतिस्त्वात्मनः उपाधिकृत-परिच्छेदमनुवदत्यपरिच्छिन्नस्वरूपज्ञापनाय तस्मादाकाशवत् सर्वगत इत्यादिश्रुतयोऽपि जीवस्य सर्वगतत्वाभिप्रायाः परमात्मन एवोपाधि-निबन्धनजीवत्वादित्यधिकमाकरे।।

इति सर्वगतप्रकरणम्।।२९।।

## अथ आत्मनः सुखस्वरूपताप्रकरणम्

**जगन्नद्यां कीटा इव जननधारासु पतिताः**
**कथञ्चित् सद्बुद्ध्या गुरुकरुणया स्वात्मसुखताम्।**
**परब्रह्माभिन्नामसुभृत इह प्राप्य जगती-**
**महापाशान्मुक्ताः सुरधुनि तवालम्बवशतः।।३०।।**

**पदच्छेदः** - जगद्-नद्याम् कीटाः इव जनन-धारासु पतिताः, कथञ्चिद्। सद्-बुद्ध्या गुरु-करुणया स्व-आत्म-सुखताम्। पर-ब्रह्म-अभिन्नाम् असु-भृतः इह प्राप्य जगती, महा-पाशाद् मुक्ताः सुरधुनि! तव आलम्ब-वशतः।।

**अन्वयः**:- *(भो) सुरधुनि! जगन्नद्यां कीटा इव जननधारासु पतिताः असुभृतः कथञ्चित् गुरुकरुणया तवालम्बवशतः सद्बुद्ध्या परब्रह्माभिन्नां स्वात्मसुखतां प्राप्य जगतीसंसारपाशाद् मुक्ताः भवन्ति।*

भावार्थ – हे सुरधुनि! संसार रूपी नदी में कीड़ों की तरह जननधारा में पड़े हुए जीव किसी प्रकार से गुरु की करुणा से सद्बुद्धि के द्वारा तुम्हारी कृपा से परब्रह्मस्वरूप आत्मसुखता को प्राप्त करके जगत् के महाबन्धन से मुक्त होते हैं।

**ग.ल.व्याख्या- जगन्नद्यामिति। भो सुरधुनि! जगन्नद्यां कीटा इव जननधारासु पतिता जीवाः कथञ्चिद् गुरुकृपया तवालम्बवशतः सद्बुद्ध्या परब्रह्माभिन्नां स्वात्मसुखतां प्राप्य संसारपाशान्मुक्ता भवन्तीत्यर्थः।**

**अयं भावः- यद्यप्यहं सुखीति सुखात्मनोर्भेदप्रतीतेः सुखमहमित्यभेदाप्रतीतेश्चात्मा न सुखस्वरूपः आत्मन्युपलभ्यमाने-ऽप्यनुपलभ्यमानत्वाच्चेति वक्तुं शक्यम्, तथापि 'आत्मैवानन्द' 'आनन्द आत्मा' 'यो वै भूमा तत् सुखम्' इत्यादिश्रुतेः आत्मा आनन्दरूपः निरूपधिप्रेमास्पदत्वात् सुखवदित्यनुमानाच्चात्मा**

सुखस्वभावोऽभ्युपेयते। न च प्रेमास्पदत्वमसिद्धं मा न भूवं भूयासमित्यात्मविषया विशेषस्य दृश्यमानत्वात् 'तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरंदयमात्मा' इति श्रुतेश्च। नन्वथापि निरूपधिप्रेमास्पदत्वमसिद्धम्, आत्मनोऽपि सुखार्थत्वादिति चेन्मैवम्, सुखं पुरुषार्थं नात्मसुखार्थः। अन्यथा सुखस्य तत्साधनस्य चापुरुषार्थत्वं तदर्थं पुरुषप्रयत्नो न भवेत्। न च तर्हि सुखस्यान्यार्थत्वान्निरूपधिप्रेमास्पदत्वात् साधनविकलो दृष्टान्तः इति शक्यम्, तस्यापि परमार्थतोऽन्यार्थत्वाभावात्, अध्यासनिमित्तत्वादन्यार्थप्रतिभासस्य सुखात्मनोर्भेदस्य भ्रान्तिमूलत्वात्। तस्मादात्मा सुखस्वरूप इति सिद्धम्। न चाहं सुखीत्यादिप्रतीतिविरोधः, तासां प्रमातृचैतन्ये स्वाध्यास्तान्तःकरणधर्मवृत्तिविषयत्वात्, सिद्धान्ते ज्ञानसुखादिवृत्तीनामन्तःकरणधर्मत्वात्। अत एव नाहं सुखमित्यधिकमाकरे।।

इत्यात्मनः सुखस्वरूपताप्रकरणम्।।३०।।

## अथ कर्तृत्वादिबन्धमिथ्यात्वम्

अलेपे[50] यस्मिन् वै निरवधिचिदानन्दविभवे
पराविद्याऽध्यासं तनुत इह कर्तृत्वमुखतः।
तदेव त्वं विद्याऽधिगतनिजरूपा भगवती
ततस्त्वां सेवन्तेऽमृतरसपदाप्त्यै सुरधुनि।।३१।।

**पदच्छेदः** - अलेपे अस्मिन् वै निरवधि-चिद्-आनन्द-विभवे, परा-अविद्या अध्यासम् तनुते इह कर्तृत्व-मुखतः। तद् एव त्वम् विद्या-अधिगम-निजरूपा भगवती, ततः त्वाम् सेवन्ते अमृत-रस-पद-आप्त्यै सुरधुनि!।।

**अन्वयः-** *भो सुरधुनि! परा अविद्या यस्मिन् अलेपे निरवधि चिदानन्दविभवे कर्तृत्वमुखतः अध्यासं तनुते, विद्याधिगमनिजरूपा त्वं तदेव। अतः त्वाम् अमृतरसपदाप्त्यै सेवन्ते।*

**भावार्थ** – हे सुरधुनि! परा अविद्या जिस निस्सङ्ग चिदानन्दरूप में कर्तृत्वरूपेण अध्यास का विस्तार करती है, विद्या के द्वारा ज्ञात होने वाला वह निजस्वरूप तुम ही हो। इसीलिए लोग स्वरूपज्ञानरूपी अमृतरस की प्राप्ति के लिए तुम्हारा सेवन करते हैं।

**ग.ल.व्याख्या- अलेप इति। भो सुरधुनि! पराऽविद्यामूलाज्ञानं यस्मिन् अलेपे चिदानन्दविभवे कर्तृत्वमुखतः अध्यासं तनुते। विद्यया अधिगतं ज्ञातं निजरूपं कर्तृरूपं यया ईदृशी अतस्त्वाम् अमृतरसदाप्त्यै सेवन्त इत्यन्वयः।**

**अयं भावः-यद्यप्यात्मनि कर्तृत्वादिसंसारस्य प्रतीयमानत्वात् प्रतीतेश्च स्वतःप्रामाण्यात् कारणदोषबाधकप्रत्ययानुपलम्भात् प्रमाणप्रतीतस्यैव परमार्थत्वात् आत्मनि संसारः परमार्थः। किञ्च यदि परमार्थो न भवेत्, तदेष्टानिष्टपरिहारादेशे न साधनविधायिशास्त्रप्रमाणं स्यात्। रज्जुसर्पनिवृत्तये मणिन्त्राद्युपदेशाभावादिति वक्तुं शक्यम्, तथाप्यध्यासमन्तरेणात्मनि सुखदुःखकर्तृत्वादिसम्बन्धस्यानिर्वचनात् पारमार्थिकत्वे मोक्षानुपपत्तेः। 'स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययमात्मा' 'तत्त्वमसि' इत्यादिश्रुतिप्रतिषिद्धत्वाच्चात्मनि संसारो न पारमार्थिकः, किन्त्वविद्याविजृम्भित एव, मृगतृष्णोदकसमुद्रसमुद्गतवीचीतरङ्गवत्। न च साधनविधायिशास्त्रमनर्थकम्, ब्रह्मात्मबोधात् प्राक् भ्रान्तपुरुषाभिप्रायमनुसृत्य साधनविधानात्।।**

**इति कर्तृत्वादिबन्धमिथ्यात्वम्।।३१।।**

## अथ जीवब्रह्मैकत्वप्रकरणम्

जनं दीनं दृष्ट्वा श्रुतिवनितयाऽदर्शि कृपया
स्थितः कण्ठे मुक्तामणिरिव जनैर्ब्रह्म यदिह।
परं प्रत्यक्त्वेनाखिलहृदयगूढं सुखभरं
तदेव त्वं गङ्गे स्मृतिपथगता स्या अविरतम्।।३२।।

**पदच्छेदः** – जनम् दीनम् दृष्ट्वा श्रुति-वनितया अदर्शि कृपया, स्थितः कण्ठे मुक्ता-मणिः इव जनैः ब्रह्म यद् इह। परम् प्रत्यक्त्वेन अखिल-हृदय-गूढम् सुखभरम्, तद् एव त्वम् गङ्गे स्मृति-पथ-गता स्या अविरतम्।।

**अन्वयः**- *भो सुरनदि! श्रुतिवनितया दीनं जनं दृष्ट्वा कृपया जनैः कण्ठे स्थिता मुक्तामणिरिव यत् सुखभरं परं ब्रह्म अखिलहृदयगूढं प्रत्यक्त्वेन अदर्शि तदेव त्वम् अविरतं स्मृतिपथं गता स्याः।*

**भावार्थ** – हे सुरनदि! श्रुतिरूपी वनिता के द्वारा लोगों को दीन देखकर कण्ठ में स्थित माला की तरह जिस सुखस्वरूप परं ब्रह्म का जो कि सभी के हृदय में विद्यमान है, दर्शन कराया गया है, वह ब्रह्म तुम ही हो। ब्रह्मस्वरूपिणी गङ्गे सदा हमारी स्मृति में विराजमान रहो।

**ग.ल.व्याख्या**- जनमिति। भो सुरनदि! श्रुतिवनितया दीनं जनं दृष्ट्वा कृपया जनैः कण्ठे स्थिता मुक्तामणिरिव यत्परं ब्रह्माखिलहृदयेषु गूढं प्रत्यक्त्वेनादर्शि दर्शितं तदेव त्वं पूर्णा अविरतं स्मृतिपथं गता स्याः भूया इत्यन्वयः।

**अयं भावः**-यद्यपि जीवो नाम कार्यकारणसङ्घाताभिमानिधर्माधर्मवान् परिच्छिन्नज्ञानशक्तिरत्यन्तपराधीनः। ईश्वरः पुनः कार्यकारणाभिमानरहितो धर्माधर्माद्यतीतो निरतिशयज्ञानसम्पन्नोऽपरतन्त्रः। ततश्च विरुद्धस्वभावयोः कथमपि नाभेदो युक्त इति

तत्त्वमाद्युक्तिर्गौणीति वक्तुं शक्यम्, तथापि विरुद्धानां मृषात्वात् तत्र प्रयुक्तभेदस्यापि तथात्वात् 'योऽन्यां देवतामुपास्तेऽन्यो सावन्योहम् अस्मीति न स वेद' इत्यादिना निन्दनाच्च न तत्त्वमाद्युक्तिर्गौणी। तस्मादेकत्वप्रतिपादिकाः श्रुतयोऽद्वितीवस्तुपर्यवसायिन्य एवेति। तद्विरोधाद् भेदप्रतीतेर्भेदश्रुतीनां चाविद्यकविषयत्वमेवात एव न भेदाभेदश्रुतिबलाद् भेदाभेदावपीत्यधिकमाकरे।।३२।।

इति जीवब्रह्मैकत्वप्रकरणम्।।३२।।

## अथ सृष्टिः प्रतिभासमात्रशरीरा अज्ञानोपहिता चिद् जीवं, दृश्यं सर्वं प्रातिभासिकम् इत्यादि निरूपणप्रकरणम्

यदाभासं जीवं जननि प्रतिबिम्बं तमपरे
परे चावच्छेदं पर इह दृशं सृष्टिमविदन्।
समस्तानुस्यूताऽमृतमपि विकल्पैर्विरहिता
तदेव त्वं गङ्गे भवसि भवशर्मार्थमनघे।।३३।।

**पदच्छेदः** - यद् आभासम् जीवम् जननि! प्रतिबिम्बम् तम् अपरे, परे च अवच्छेदम् परे इह-दृशम् सृष्टिम् अविदन्।। समस्त-अनुस्यूता अमृतम् अपि विकल्पैः विरहिता। तद् एव त्वम् गङ्गे भवसि भव-शर्म-अर्थम् अनघे ।।

**अन्वयः**- *भो अनघे गङ्गे जननि! (केऽपि) जीवं यत् आभासम् अविदन्, अपरे प्रतिबिम्बम्, परे च अवच्छेदम्, परे दृशं सृष्टिम्, तदेव त्वं समस्तानुस्यूता भवशर्मार्थम् इह भवसि।*

भावार्थ – हे अनघे माँ गङ्गे ! कुछ दार्शनिक जीव को ब्रह्म का आभास मानते हैं, तो कुछ अन्य जीव को ब्रह्म का प्रतिबिम्ब, जबकि कुछ का मानना है कि जीव ब्रह्म का अवच्छेद है। कुछ अन्य दार्शनिकों के अनुसार दृश्य ब्रह्म की सृष्टि है। ये दार्शनिक जीव को जिसका आभास, प्रतिबिम्ब, अवच्छेद या सृष्टि मानते हैं वह ब्रह्म तुम ही हो, जो सभी में अनुस्यूत हो। ऐसी हे जननि ! तुम संसार की कल्याणकारिणी बनो।

ग.ल.व्याख्या- यदाभासमिति। भो अनघे गङ्गे जननि! केऽपि जीवं यत् यस्याभासम् अविदन्, अपरे प्रतिबिम्बम्, परे च अवच्छेदम्, परे दृश्यं दृष्टिं सृष्टिम् अविदन्, तदेव त्वं समस्तानुस्यूता जीवजगद्विकल्पैर्विरहिता भवशर्मार्थं संसारस्य सुखार्थम् इह भवसि व्यक्तासीत्यन्वयः।

अयं भाव–यद्यपि मूर्तद्रव्यस्य सरूपस्यैव मूर्तान्तरे स्वच्छद्रव्ये प्रतिबिम्बभावो दृष्टः। ब्रह्मणः पुनरमूर्तत्वान्नीरूपत्वात् सर्वगतत्वाद-द्वितीयत्वाच्च न प्रतिबिम्बाभासौ सम्भवतः, नाप्यवच्छेदः अद्वितीयत्वात्, न च माययावच्छेदः, तस्या अवस्तुत्वात्, नाप्यन्तः-करणेन, तस्य संसार्युपाधित्वात्। एवं न दृष्टिः सृष्टिः, नित्यदृष्टेः सृष्टित्वे सर्वदा सृष्ट्यापत्तेः, वृत्तिदृष्टेः सृष्टित्वे ब्रह्मणोऽपि सृज्यत्वापत्तेस्तस्माच्चत्वारोऽपि वादा न युक्ता इति वक्तुं शक्यम्, तथाप्यमूर्तस्य नीरूपाकाशस्य जले प्रतिबिम्बदर्शनात् 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवः', 'क्षेत्रेष्वेवमजोऽयमात्मा' इत्यादिश्रुतेश्च ब्रह्मणः प्रतिबिम्बाभासयोः सम्भवात्, मायाया अवस्तुत्वेऽपि संसार-बीजरूपाया अभावविलक्षणत्वरूपवस्तुत्वात् अन्तःकरणस्य संसार्युपाधित्वेऽपि मायाद्वारा ब्रह्मणापि सम्बन्धात्ताभ्याम-वच्छेदस्यापि सम्भवात्। अविरोधोपहितदृष्टेः सप्रकारकवृत्तेरेव वा सृष्टित्वेन दृष्टिसृष्टावप्युक्तदोषासम्भवाच्चत्वारोऽपि वादा युक्ता एवेति। तत्राभासवादो 'मायाभासेन जीवेशौ करोति' इत्यादि-

श्रुतिबलाद्। वार्तिककाराणां प्रतिबिम्बवादो 'रूपं रूपं प्रतिरूपो बभूव', 'तदस्य रूपं प्रतिचक्षणाय' इत्यादिश्रुतिबलाद्। विवरण-काराणाम् अवच्छेदवादो

घटसंवृतमाकाशं नीयमाने यथा घटे।
घटो नीयेत नाकाशं तद्वद् 'जीवो नभोपमम।।

इत्यादिश्रुतिबलाद्। वाचस्पतिमिश्राणां दृष्टिसृष्टि-र्भाष्यकारीयाणाम् 'इदं सर्वं दृष्ट्वा' इत्यादिश्रुतिबलाद्। न च सिद्धे विकल्पायोगात् परस्परविरुद्धानां प्रामाण्यं दुर्घटम्, अद्वैत-प्रतिपत्त्युपयोगितयाऽधिकारिभेदेन प्रामाण्यसम्भवात्। तदुक्तं-

'यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता।।

इति। तत्र भासो नाम दर्पणान्तर्गतमुखवदनिर्वाच्यश्चिदाभासो बिम्बादतिरिक्त एव। प्रतिबिम्बो नाम उपाध्यन्तर्गतस्वरूपारोपित-धर्मवान् बिम्ब एव सत्यः। अवच्छेदो नाम महाकाशस्य घटाकाश-वदेकदेशोंऽशोऽविच्छिन्नो यावद्दृष्टि सृष्टिर्नाम दृष्टिरेव सृष्टिः प्रतिभासमात्रशरीरा ज्ञानोपहिता चिज्जीवो दृश्यं सर्वं प्रातिभासिक-मिति यावत्।

इत्यादिनिरूपणप्रकरणम्।।३३।।

## अथ अज्ञानस्य भावत्वनिरूपणप्रकरणम्

न सत्त्वासत्त्वाभ्यां गदितुमपि शक्या स्वसदृशीं
प्रपञ्चस्य व्यक्तिं तनुत इह माया सुखघनम्।
परं यं प्राप्य द्रागपसरति मन्दाक्षमहह[51]
*तदेव त्वं गङ्गे[52]ऽमृतसुखविधात्री स्मृतिमिता[53]।।३४।।

**पदच्छेदः** – न सत्त्व-असत्त्वाभ्याम् गदितुम् अपि शक्या स्व-सदृशीम्, प्रपञ्चस्य व्यक्तिम् तनुते इह माया सुख-घनम्। परम् यम् प्राप्य द्राक् अप-सरति मन्द-अक्षम् अहह, तद् एव त्वम् गङ्गे अमृत-सुख विधात्री स्मृति-मिता।।

**अन्वयः**– *सत्त्वासत्त्वाभ्यां गदितुमपि नशक्या माया इह स्वसदृशीं प्रपञ्चस्य व्यक्तिं तनुते। यं सुखघनं परं पुरुषं प्राप्य द्राक् मन्दाक्षम् अपसरति, अहह हे गङ्गे स्मृतिमिता अमृतसुखविधात्री त्वं तदेव।*

**भावार्थ** – सद् एवं असद् से विलक्षण माया अपने समान ही प्रपञ्च व्यष्टि का विस्तार करती है। किन्तु यह माया जिस सुखघन परं पुरुष को प्राप्त करके शीघ्र ही अपसृत हो जाती है, वह परम पुरुष तुम ही हो। तुम मोक्षरूपी सुख को प्रदान करती हो।

**ग.ल.व्याख्या**- न सत्त्वासत्त्वाभ्यामिति। सत्त्वासत्त्वाभ्यां गदितुमप्यशक्या एषा माया स्वसदृशीं प्रपञ्चस्य व्यक्तिं तनुते। यं परं पुरुषं प्राप्य द्राक् शीघ्रं मन्दाक्षं यथा स्यात् तथापसरतीत्यहह आश्चर्यम्। लोके हि स्त्री पुरुषं प्राप्य सृजति इयं पुरुषं प्राप्यापसरतीत्याश्चर्यमनिर्वाच्येति यावत्। स्वसदृशीं सृजतीति कथनादनादिभावत्वमपीति भावः। स्मृतिं प्राप्ता त्वम् अमृतसुख-विधात्रीत्यन्वयः।

मायात्राज्ञानम्। यद्यपि 'अहमज्ञ' इत्यादिप्रतीतीनां ज्ञान-प्रतिषेधरूपतया ज्ञानविशेषप्रागभावध्वंसविषयत्वोपपत्तेः अज्ञानेना-वृतमित्यादिस्मृतीनां मिथ्याज्ञानजवासनाविषयत्वेनोपपत्ते र्नानादि-भावरूपाज्ञाने किञ्चित् प्रमाणमिति वक्तुं शक्यम्, तथापि 'मूढोऽहं' 'न जानामि' इत्यनुल्लिखितविषयविशेषस्याप्यज्ञानस्याप्यनुभवाद् वृत्तिविशेषाभावस्य वक्तुमशक्यत्वात् धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां व्याप्यतापत्तेः, सामान्याभावस्यापि वक्तुमशक्यत्वात्। 'देवात्म-

शक्तिं स्वगुणैर्निगूढाम्' इति गुणवत्वश्रुतेश्च। 'मायां तु प्रकृतिं विद्यात्' माया चाविद्या च स्वयमेव भवति। 'अनृतेन हि प्रमूढा नीहारेण प्रावृता' इत्यादिश्रुतिभिश्च मायाविद्यादिशब्दव्यपदेश्यं तत्त्वज्ञान निवर्त्यमनादिभावरूपाज्ञानं ज्ञानपर्युदासेनाज्ञानशब्देनोच्यमानमभ्युपेयते। तच्च न सत्, बाधात्, नाप्यसत्, प्रतीयमानत्वात्। नापि सदसत्, विरोधात्। तस्मात् सदसद्विलक्षणमनिर्वाच्यमेवेति भावः।।

इत्यज्ञानस्य भावत्वनिरूपणम्।।३४।।

## अथ अभावनिरूपणप्रकरणम्

विभागेनाभावं ह्यवगमयती भावमपि च
सृजिस्थैर्नाना नेत्युचित[55]वचनैश्च श्रुतिवपुः।
चिदात्मानं शश्वत् सुरतटिनि भावेन गदती
त्वमस्यात्मा सेव्याऽमरवरनिषेव्याङ्घ्रिकमला।।३५।।

**पदच्छेदः** – विभागेन अभावम् हि अवगमयती भावम् अपि च, सृजिस्थैः नाना न इति उचित-वचनैः श्रुति-वपुः। चिद्-आत्मानम् शश्वत् सुरतटिनि भावेन गदती, त्वम् अस्य आत्मा सेव्या अमरवर-निषेव्या अङ्घ्रिकमला।।

**अन्वयः**- *भो सुरतटिनि! श्रुतिवपुः त्वं सृजिस्थैः वचनैः विभागेन भावम् अपि च 'नाना न' इति (नेह नानास्ति) इति उचितवचनैः अभावम् अवगमयती भावेन शश्वत् चिदात्मानं गदती अमरवरनिषेव्या अङ्घ्रिकमला सेव्या आत्मा असि।*

भावार्थ – हे देवनदि ! तुम वेदरूपी शरीर वाली हो। तुम ही सृष्टि विषयक वचनों से भाव पदार्थों का तथा 'नेह नानास्ति किञ्चन' इत्यादि उचित वचनों से अभाव का बोध कराती हुई शश्वत् चिदात्मा का ही कथन करती हो। तुम ही देवताओं के द्वारा सेव्या आत्मस्वरूपा हो।

ग.ल.व्याख्या- विभागेनेति। भो सुरतटि! देवनदि! श्रुतिवपुंस्त्वं सृजिस्थैः सृष्टिविषयैर्वचनैर्भावम् अपि च 'नेह नानास्ति' इत्युचित-वचनैर्हि निश्चयेनाभावम् अवगमयन्ती बोधयन्ती भावेन तात्पर्येण चिदात्मानं गदन्ती अमरवरनिषेव्याङ्घ्रिकमलात्मस्वरूपासीत्यन्वयः।

अयं भावः-यद्यपि भूतले घटो नास्तीत्यादिप्रतीतिः केवल-भूतलाद्यधिकरणविषयैव, न तत्त्वान्तरविषया भूतलविषयविज्ञान-व्यतिरेकेणाभावविषयप्रतीतेरदर्शनादिति वक्तुं शक्यम्, तथापि नाभावाख्यं तत्त्वान्तरमपलपितुं शक्यम्, तच्छब्दप्रत्ययोर्निरा-लम्बनत्वप्रसङ्गात्। न च तौ भूतलमात्रविषयाविति वक्तुं शक्यम्, तर्हि भावशब्दप्रत्ययावपि घटविषयौ तथैव स्याताम्। तस्माद् भूतले घटो नास्तीति व्यवहारो भूतलमात्रालम्बनो न भवति। भूतले वस्त्वन्तरप्रतियोगिकव्यवहारत्वात्, घटव्यवहारवदित्यनुमानात्, 'नेह नानास्ति' इत्यादिश्रुतेस्तत्त्वान्तरं विना मोक्षनिर्वचनानुपपत्तेश्च, भाववदभावोऽपि तत्त्वान्तरम्। न च द्वैतश्रुते भावाद्वैताभिप्रायत्वात् परमार्थसदेकाभिप्रायत्वाद्वेत्यधिकमाकरे।।

इत्यभावनिरूपणम्।।३५।।

## अथ सत्कार्यवादनिरूपणप्रकरणम्

सदेवासीदग्रे श्रुतिरिति जगौ कार्यविषयं
पुरा सत्त्वं तस्मादसदपगतेर्यद् व्यवगतम्।
परं ब्रह्मत्वं तन्निखिलशरणं जह्नुतनये
न ये त्वां सेवन्ते कथमहह ते सद्गतिजुषः।।३६।।

पदच्छेदः - सद् एव आसीत् अग्रे श्रुतिः इति जगौ कार्य-विषयम्, पुरा सत्त्वम् तस्माद् असद्-अपगतेः यद् व्यवगतम्। परम् ब्रह्म त्वम् तद् निखिल-शरणम् जह्नु-तनये, न ये त्वाम् सेवन्ते कथम् अहह ते सद्-गति-जुषः।।

अन्वयः- *भो जह्नुतनये! 'सदेवासीदग्रे' इति श्रुतिः कार्यविषयं पुरा सत्त्वं जगौ। तस्मात् असदपगतेः हि यत् व्यपकातं तत् परं ब्रह्म त्वम् असि। अहह निखिलशरणं त्वां ये न सेवन्ते ते सत्कृतिजुषः कथं (भवन्ति)।*

भावार्थ - हे जह्नुतनये! 'सदेवासीदग्रे' इस श्रुति से कार्य की उत्पत्ति से पूर्व उसकी सत्ता को स्वीकार किया गया है। अतः असत्कार्यवाद का निरास हो जाने से जिस सद्रूप ब्रह्म की सिद्धि होती है, वह तुम ही हो। सभी की शरणभूता तुम्हारा जो सेवन नहीं करते हैं वे पुण्य के भागी कैसे हो सकते हैं।

ग.ल.व्याख्या- सदेवासीदिति। भो जह्नुतनये! 'सदेवासीदग्र' इति श्रुतिः पुरा कार्योत्पत्तेः प्राक् कार्यविषयं सत्त्वं सद्भावं जगौ। तस्मादसतोऽसद्वादस्यापगतेर्निरासात् हि निश्चयेनावगतं यत्परं ब्रह्म तत्त्वं निखिलशरण्यम्। ये त्वां न सेवन्ते ते सत्कृतिजुषः कथं भवन्तीत्यहहेति खेदे इत्यन्वयः।

अयं भावः-यद्यपि कार्यं प्रागुत्पत्तेरसदेव कारणस्योपलम्भेऽप्यनुपलभ्यमानत्वात्, सत्त्वे हि स्वकारणेन मृदादिनोपलभ्यमानेन सहैवोपलभ्येत, न चोपलभ्यते, किं च जन्मनः प्राक् कार्यं सच्चेत्

कुलालादिकारकव्यापारवैयर्थ्यं स्यात्, न चाभिव्यक्तये कारकव्यापारो न सत्त्वायेति वाच्यम्, अभिव्यक्तेरपि सदसद्विकल्पग्रासात्। तस्मादसदेव कार्यमिति वक्तुं शक्यम्, तथापि नोत्पत्तेः प्रागसत्कार्यमनुत्पत्तिप्रसङ्गात्, असतो घटादेः कारणेन सम्बन्धसासम्भवात् सम्बन्धस्य सम्बन्धिनिरूप्यत्वात्, तस्मात् सदेव कार्यम्। न च कारकव्यापारवैयर्थ्यम् अभिव्यक्तौ एतत्सार्थक्यात्। न चाभिव्यक्तावपि सदसद्विकल्पः व्यवहारोपयोगितत्कार्याभिव्यक्तेः सत्त्वगुणरूपतया नित्यत्वेऽपि तमसा प्रतिबद्धत्वान्न व्यवहारोपयोगित्वम्, अभिव्यञ्जकसामग्र्या तूत्तेजकेन मणेरिव तमसः प्रतिबन्धाद् व्यवहारक्षमत्वमिति सामग्र्या उत्तेजकत्वमात्राङ्गीकाराददोषात्।।

इति सत्कार्यवादनिरूपणम्।।३६।।

## अथ देहात्मवादनिरूपणप्रकरणम्

न दृश्ये द्रष्टृत्वं[55] क्वचिदपि घटादाविव भवेद्
विकारे देहादौ दृशि न च भवेद् दृग्विषयता।
चितिं[56] श्रुत्या युक्त्याऽनुभवबलतस्त्वां परतरे
विचिन्त्य श्रीगङ्गे त्वयि सुमनसः सादरतराः।।३७।।

**पदच्छेदः** - न दृश्ये द्रष्टृत्वं क्वचिद् अपि घटादौ इव भवेत्, विकारे देहादौ दृशि न च भवेद् दृग्-विषयता। चितिं श्रुत्वा युक्त्या अनुभवबलतः त्वाम् परतरे, विचिन्त्य श्रीगङ्गे त्वयि सुमनसः सादरतराः।।

**अन्वयः**- *भो गङ्गे विकार्ये देहादौ दृश्ये घटादाविव क्वचिद् अपि न द्रष्टृत्वं न दृशि दृग्विषयता भवेत्। सुमनसः शुद्धधियः श्रुत्या युक्त्या अनुभव-बलतः त्वां परां चितिं विचिन्त्य त्वयि सादरतरा भवन्ति।*

**भावार्थ** – हे जननि गङ्गे ! दृश्यमान विकार्य देहादि घटादि के समान कभी द्रष्टा नहीं हो सकते। चिद्रूप द्रष्टा में दृग्विषयता नहीं हो सकती है। अतः पवित्र मन वाले, शुद्ध बुद्धिवाले लोग श्रुतिसमर्थित युक्तियों एवं अनुभव के बल से तुम्हें परम चैतन्य स्वरूपा मानकर तुममें अपनी सम्पूर्ण श्रद्धा रखते हैं।

**ग.ल.व्याख्या- न दृश्य इति। भो श्रीगङ्गे विकार्ये देहादौ दृश्ये घटादाविव क्वचिदपि दृष्टृत्वं ( न ) भवेत्। अथ च दृशि चिद्रूपे द्रष्टरि दृग्विषयता दृश्यत्वं नैव भवेत्। सुमनसः शुद्धधियः श्रुत्या युक्त्या अनुभवबलतः त्वां परां चितिं विचिन्त्य त्वयि सादरतरा भवन्तीति शेषेणार्थः।**

**अयं भावः-यद्यपि गौरोऽहं जानामीति गौरत्वज्ञानत्वयोः सामानाधिकरण्यग्रहाद् देह एवात्मा, सत्यपि देहात्मनोरभेदे मम शरीरमिति भेदप्रत्ययस्तु ममात्मेतिवदौपचारिकः। न च देहेऽहं-प्रत्ययोऽपि पुत्र इवौपचारिकः, मनुष्योऽहमिति मनुष्यजाति-मात्रवाचित्वात्, जातिशब्दानुविद्धस्य च व्यक्तौ मुख्यत्वसिद्धे-र्गौरितिवन्मुख्य एव देहेऽहं प्रत्यय इति वक्तुं शक्यम्, तथाप्यहं प्रत्ययो देहे आध्यासिकः, न वस्तुभूतः, अहं-प्रत्ययस्य ज्ञानवति वास्तवत्वप्रसिद्धेः ज्ञानस्य देहधर्मत्वानुपपत्तेः। देहस्य घटवद् भौतिकतया चैतन्याभावात्। तस्माद् देहस्य दृष्टत्वाभावाद् देहातिरिक्त एवात्मा, न देहो, दृश्यत्वात्, तत्राहंप्रत्ययोऽध्यास एव। न चात्र भ्रमितव्यम्, गौरोऽहं प्रत्ययो नाध्यास इति गौणो नामाज्ञानभेद-योरेकत्वावभासः यथा सिंहो देवदत्त इति। अध्यासो नाम अज्ञातभेदयोरेकत्वावभासः। न चाहमिति व्यतिरिक्तविषयः विचारसाध्यत्वाद् व्यतिरेकस्येत्यधिकमाकरे।।**

**इति देहात्मवादनिरासप्रकरणम्।।३७।।**

## अथ क्षणभङ्गवादनिरूपणप्रकरणम्

**स्थिरा त्वं चैतन्यामृतरसपदा दृश्यमपि च**
**स्थिरं पश्यस्यम्बे[57]त्यनुदिनमिदं भावयति यः।**
**कृती[58] कश्चिद् भूयः स्थिरतरसुखं चामृतपदं**
**भवेदाप्तो गङ्गे जननि तव कारुण्यवशतः।।३८।।**

**पदच्छेदः** - स्थिरा त्वम् चैतन्य-अमृत-रस-पदा दृश्यम् अपि च, स्थिरम् पश्यसि अम्ब इति अनुदिनम् इदम् भावयति यः। कृती कश्चित् भूयः स्थिरतर-सुखम् च अमृत-पदम्, भवेद् आप्तः गङ्गे जननि! तव कारुण्य-वशतः।।

**अन्वयः-** *भो जननि! यः कश्चित् सुकृती 'चैतन्या अमृतरसपदा स्थिरा त्वं स्थिरं दृश्यं पश्यसि' इति इदम् अनुदिनं भूयः भावयति स तव कारुण्य-वशतः स्थिरतरसुखम् अमृतपदम् आप्तः भवेत्।*

**भावार्थ** - हे जननि! 'चैतन्यस्वरूपा, मोक्षदायिका, स्थिरस्वभावा तुम स्थावर दृश्यमान जगत् को अपना विषय बनाती हो' जो पुण्यात्मा ऐसा अनुभव करते हैं, वे तुम्हारी करुणा के वशीभूत होकर सर्वदा स्थिर मोक्ष को प्राप्त करते हैं।

**ग.ल.व्याख्या-** **स्थिरा त्वमिति। भो जननि गङ्गे! यः कश्चित् सुकृती स्थिरा त्वं स्थिरं दृश्यं पश्यसि विषयीकरोषि इति अनुदिनं भावयति अम्ब गङ्गे! स तव कारुण्यवशतः स्थिरतरस्वरूपं मोक्षमाप्तो भवेदित्यन्वयः।**

**अयं भावः-यद्यपि घटादयः क्षणिकाः, सत्त्वात्, व्यतिरेके गगनकुसुमवद्, इत्यनुमानात् घटादेः क्षणिकत्वं वक्तुं शक्यम्, तथापि तन्न युक्तम्, सोऽयमिति प्रत्यभिज्ञाविरोधात्। न च प्रत्यभिज्ञा न प्रमाणं संस्कारजन्यत्वेन तत्प्रत्यक्षानन्तर्भावात् व्याप्तिज्ञान-**

जन्यत्वाभावान्नानुमानादिति वाच्यम्, संयोगजन्यत्वादपरोक्ष-विषयत्वाच्च प्रत्यक्षेऽन्तर्भावसम्भवादित्यधिकमाकरे।।

इति क्षणभङ्गनिरासप्रकरणम्।।३८।।

## अथ विज्ञानवादनिराकरणम्

**जडत्वं कार्यत्वं परिमितिपथं नात्रभवती**
**श्रयस्यम्ब क्वापि क्षणिकपदवीं न[59] क्षणमपि।**
**स्थिराऽतश्चिद्रूपा भवसि भवपारां श्रुतिगिरा**
**जुषन्ते गङ्गे त्वां सुरनर[60]धुरीणाः सुकृतिनः।।३९।।**

**पदच्छेदः** - जडत्वम् कार्यत्वम् परिमिति-पथम् न अत्रभवती, श्रयसि अम्ब! क्व अपि क्षणिव-पदवीम् त्वम् क्षणम् अपि। स्थिरा अतः चिद्-रूपा भवसि भव-पाराम् श्रुति-गिरा, जुषन्ते गङ्गे! त्वाम् सुर-नर-धुरीणाः सुकृतिनः।।

**अन्वयः-** *भो अम्ब! अत्र भवती त्वं जडत्वं कार्यत्वं परिमितिपथं क्षणमपि क्षणिकपदवीं न श्रयसि। अतः त्वं श्रुतिगिरा चिद्रूपा भवसि। सुकृतिनः सुरनरधुरीणाः भवपारां त्वां सेवन्ते।*

**भावार्थ** – हे जननि गङ्गे! तुम जडत्व, कार्यत्व, परिमितत्व आदि क्षणिक पदवी का एक क्षण के लिए भी आश्रय नहीं लेती हो। तुम श्रुतिवचनों से चैतन्यस्वरूपा हो। इसीलिए पुण्यात्मा नरश्रेष्ठ संसारसागर से पार कराने वाली तुम्हारा सेवन करते हैं।

**ग.ल.व्याख्या- जडत्वमिति। भो अम्ब गङ्गे! अत्र भवती पूज्या त्वं जडत्वं कार्यत्वं परिमितिपथं परिमितित्वं क्षणमपि क्षणिकपदवीं न श्रयसि। क्षणमपीत्यनेनैच्छिकमपि तन्नेति सूचितम्।**

अतः श्रुतिगिरा स्थिरा चिद्रूपा त्वं भवसि। सुरनरश्रेष्ठाः सुकृतिनः संसारपाररूपां त्वां सेवन्त इत्यन्वयः।

अयं भावः-यद्यपि संवित्-संवेद्यावभिन्नौ सहोपलम्भनियमात् यावभिन्नौ न भवतः, न तौ सहोपलम्भनियमौ। यथा नीलपीतौ अहं घटं जानामीत्यादिभेदप्रत्ययस्तु अनादिवासनाबलात् तस्माद् विज्ञानमात्रमात्मा दृश्यं चेति वक्तुं शक्यम्, तथापि संवेदनस्य स्वप्रकाशत्वात् संवेद्यस्यातद्रूपत्वात् सहोपलम्भनियमस्यासिद्धेः अन्तर्भावबहिर्भावभेदेन प्रत्यक्षविरोधाच्च न संवित्संवेद्ययोरभेदः, नापि विज्ञानानां क्षणिकत्वं मानाभावात्, उत्तरसंवित्काले पूर्वसंविदोऽनुपपत्तेः। क्षणिकत्वमिति चेन्नैतत् साधु, जन्मविनाश-सिद्धौ पूर्वोत्तरभावसिद्धिः, पूर्वोत्तरभावसिद्धौ च जन्मविनाश-सिद्धिरिति परस्पराश्रयप्रसङ्गात्।।

इति विज्ञानवादनिराकरणम्।।३९।।

## अथ ब्रह्माश्रयाज्ञाननिरूपणम्

करोषि त्वं पासि क्रमत[61] उत[62] संहारपदवीं
नयस्येतद् दृश्यं सगुणतनुरम्ब त्वमसि यत्।
त्वमेवातो मायावृतचितितनुर्जह्नुतनये
गुरोर्ज्ञाता मर्त्यानमृतपदवीं प्रापयसि च।।४०।।

**पदच्छेदः** - करोषि त्वम् पासि क्रमत उत संहार-पदवीम्, नयसि एतद् दृश्यम् सगुण-तनुः अम्ब त्वम् असि यत्। त्वम् एव अतः माया-वृत-चिति-तनुः जह्नु-तनये, गुरोः ज्ञाता मर्त्यान् अमृत-पदवीम् प्रापयसि च।।

**अन्वयः-** *भो जह्नुतनये! मायावृतचितितनुः त्वम् यत् सगुणतनुः एतद् दृश्यं क्रमतः करोषि पासि संहारपदवीं नयसि। अम्ब अतः त्वमेव गुरोः सकाशाद् ज्ञाता मर्त्यान् अमृतपदवीं प्रापयसि।*

**भावार्थ** – हे जननि गङ्गे! तुम माया से आवृत चैतन्यशरीरा हो। क्योंकि तुम ही इस दृश्यमान जगत् को क्रमशः उत्पन्न करती हो, पालन करती हो तथा संहार भी करती हो। अतः गुरु के सान्निध्य से ज्ञात होकर तुम्हीं सांसारिक जनों को मोक्षरूपी अमृतपदवी को प्राप्ति कराती हो।

**ग.ल.व्याख्या- करोषीति। भो अम्ब! मायावृतचितितनुस्त्वं गुणतनुः एतद् दृश्यं करोषि पासि संहारपदवीं नयसि यत् यतः अतस्त्वमेव गुरोः सकाशात् ज्ञाता मर्त्यानमृतपदवीं नयसीत्यन्वयः।**

**अयं भावः–यद्यपि 'अहमज्ञः' इत्यज्ञानस्य जीवाश्रयत्वप्रत्यक्षात् ब्रह्म न जानामीति ब्रह्मविषयत्वप्रत्यक्षात् सर्वज्ञतया ब्रह्मण्य-ज्ञानयोगाच्च ब्रह्मविषयं जीवाश्रयमेवाज्ञानम्। ततश्च जीवाश्रयस्य ब्रह्मविषयस्याज्ञानस्य निवृत्तये जीवस्य ब्रह्मोपदेशो युक्तः, अन्यथा ब्रह्माश्रयाज्ञानस्य जीवविषयत्वे ब्रह्मणो जीवोपदेशविषयं शास्त्रमिति वैपरीत्यमापद्येत, तस्मान्न ब्रह्माश्रयमज्ञानमिति वक्तुं शक्यम्, तथापि परमार्थवस्तुन एव कल्पनाधिष्ठानत्वात् ब्रह्मण एव च परमार्थ-वस्तुत्वाद् ब्रह्माश्रितमेवाज्ञानं कल्प्यते। 'अहमज्ञ' इति तु चैतन्येऽ-हंकाराज्ञानयोः सामानाधिकरण्यात्। न च ब्रह्मण्यज्ञानाभ्युपगमे सर्वज्ञत्वविरोधः, तदाश्रयत्वस्य सर्वज्ञत्वसाधकत्वात्। अविद्याश्रयत्वं विना तत्परिकल्पितप्रपञ्चज्ञत्वानुपपत्तेस्तस्माद् ब्रह्मैव स्वाश्रयाज्ञानात् संसरति मुच्यते चेत्युपदेशोऽपि तस्यैवेत्यधिकमाकरे।।**

**इति ब्रह्माश्रयाज्ञाननिरूपणम्।।४०।।**

## अथ अज्ञाननिवृत्तिनिरूपणम्

**अये[63] शान्ता दान्ता विषयविमुखा द्वेषरहिताः**
**शिवे भक्ताः सम्यक् श्रवणमननध्यानसहिताः।**
**विबुध्यात्मानं यं सुखघनमखण्डं परतरं**
**विमुक्ताविद्यास्तत् त्वमसि करुणाब्धिः सुरधुनि[64]।।४१।।**

**पदच्छेदः** - अये शान्ता दान्ता विषय-विमुखाः द्वेष-रहिताः, शिवे भक्ताः सम्यक् श्रवण-मनन-ध्यान-सहिताः। विबुध्य आत्मानम् यम् सुख-घनम् अखण्डम् परतरम्। विमुक्त अविद्याः तत् त्वम् असि करुण-अब्धिः सुरधुनि।।

**अन्वयः-** *अये! सुरधुनि! शान्ता दान्ता विषयविमुखाः शिवे भक्ताः श्रवणमननध्यानसहिताः यं सुखघनम् अखण्डं परतरम् आत्मानं विबुध्य विमुक्ताविद्याः तत् करुणाब्धिः त्वमसि।*

**भावार्थ –** हे सुरनदि! शान्त, दमादिगुणों से युक्त, विषयों से विरक्त तथा शिव में भक्ति वाले, श्रवण, मनन एवं ध्यान में संलग्न साधक जिस सुखस्वरूप अखण्ड परब्रह्म रूपी आत्मतत्त्व को जानकर अविद्या से विमुक्त होते हैं, वह करुणासागर तुम ही हो।

**ग.ल.व्याख्या- अये शान्ता दान्ता इति। अये सुरधुनि! शान्ता दान्ता विषयविमुखाः द्वेषहीनाः शिवे भक्ताः श्रवणादिपरा यं सुखघनपरात्मानमखण्डमनन्तं ब्रह्म विबुध्य विमुक्ताविद्यास्तत्कारणाब्धिस्त्वमसीत्यन्वयः।**

**अयं भावः-यद्यप्यज्ञाननिवृत्तिर्नात्मभिन्ना सती, द्वैतप्रसङ्गात्। नाप्यभिन्ना, ज्ञानसाध्यत्वानुपपत्तेः। आत्मनो नित्यसिद्धत्वाज्ज्ञानस्य नित्यनिवृत्तेस्तन्निमित्तः संसारः प्रतिभासश्च न स्यात्। नाप्यसती तर्हि तत्प्रतियोगिनोऽज्ञानस्य सत्यत्वप्रसङ्गः। लोके घटादिषु तथा**

दर्शनात्। नापि सदसती तथाविधवस्तुनोऽदर्शनात्। तथा च तस्यानिर्वचनान्न तदर्थे पुरुषप्रवृत्त्युपपत्तिरिति वक्तुं शक्यम्, तथापि यस्मिन् सति यस्याग्रिमक्षणसम्बन्धः, असति यस्मिन् यस्याभावस्तत्तत् साध्यमिति साध्यलक्षणस्य ज्ञाने सत्यज्ञाननिवृत्तिरूपात्मनोऽग्रिमक्षणसम्बन्धः। ज्ञानाभावेऽज्ञाननिवृत्त्यभावे ज्ञानमिति अज्ञाननिवृत्तिरूपात्मन्यपि सत्त्वोपपत्तेर्भिन्नसत्ताकयोर्भावाभावयोर्विरोधाभावाच्च नित्यसिद्धायामप्यज्ञाननिवृत्तौ साध्यत्वभ्रान्त्या वा पुरुषप्रवृत्त्युपपत्तेर्न काचिदनुपपत्तिः। वस्तुतो विरोधिब्रह्मज्ञानरूपैव सा। न च तत्रापि सदसद्विकल्पः, तस्यासत्त्वेऽपि तदुपलक्षितब्रह्मावाप्तेः पुमर्थत्वेनादोषादित्यधिकमस्मत्कृताद्वैतवादावल्याम्।।

इति अज्ञाननिवृत्तिनिरूपणम्।।४१।।

## अथ ज्ञानकर्मसमुच्चयनिराकरणम्

**अशेषैः पुण्यानां पटलकरणैः शुद्धकरणः[65]**
**नरोऽसौ जिज्ञासां चरमजननः प्राप्नुत इह।**
**अखण्डार्थे शुद्धे परतरसुखे जह्नुतनये**
**त्वमेवासौ सर्वे त्वयि सुरनराः प्रीतिमनसः।।४२।।**

**पदच्छेदः** – अशेषैः पुण्यानाम् पटल-करणैः शुद्ध-करणः, नरः असौ जिज्ञासाम् चरम-जननः प्राप्नुते इह। अखण्ड-अर्थे शुद्धे परतर-सुखे जह्नु-तनये, त्वम् एव असौ सर्वे त्वयि सुर-नराः प्रीति-मनसः।।

**अन्वयः**– *भो जह्नुतनये! पुण्यानां पटलकरणैः शुद्धकरणः असौ चरमजननः नरः परतरसुखे अखण्डार्थे इह शुद्धे जिज्ञासां प्राप्नुते। असौ*

*(अखण्डार्थः) त्वमेव। (अतः) सर्वे सुरनराः त्वयि प्रीतिमनसः सन्ति।*

**भावार्थ** – हे जह्नुतनये! पुण्यपटल रूपी करणों से शुद्ध अन्तःकरण वाले अन्तिम जन्म वाले मनुष्य जिस शुद्ध अखण्ड अर्थ में जिज्ञासा को प्राप्त करते हैं, वह अखण्ड अर्थ तुम ही हो। इसीलिए सभी सुर नर तुममें ही प्रेम रखते हैं।

**ग.ल.व्याख्या– अशेषैरिति। भो जह्नुतनये! पुण्यानां पटलान्येव कारणानि साधनानि तैरशेषैः शुद्धान्तःकरणः असौ चरमजन्मा नरः अखण्डार्थे शुद्धे जिज्ञासां प्राप्नुते विविदिषन्ति यज्ञेनेत्यादिश्रुतेः। असौ अखण्डार्थस्त्वमेव। अतः सर्वे सुरनरास्त्वयि प्रीतिमनसः प्रीतियुक्ता इत्यन्वयः।**

**अयं भावः–यद्यपि निषिद्धानां दुरितफलत्वात् अभ्युदय-फलत्वाच्च काम्यानां पारिशेषन्यायेन साधनसाकाङ्क्षस्य मोक्षस्यानुपलभ्यमानफलान्तरं नित्यनैमित्तिकं कर्मसाधनत्वेन सम्बद्ध्यते। यदि चाग्निहोत्रादिकर्मव्यतिरेकेणापवर्गमुद्दिश्य साधनान्तरं विधीयेत तदा कुर्वन्नेवेह कर्माणीति यावज्जीव-श्रुतिरुपपद्येत। तस्मात् कर्माण्येव मोक्षसाधनानि 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति स्मृतेश्च। अथवा ज्ञानान्नित्यादि-कर्मसमुच्चितान्मोक्षो 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इति श्रुतेः इत्यादि वक्तुं शक्यम्, तथापि मोक्षस्य कर्मजन्यत्वे स्वर्गादिवदनित्यत्वापत्तेः। 'न कर्मणा न प्रजया धनेन' इत्यादिश्रुत्या कर्मणो मोक्षसाधनत्वप्रतिषेधात् 'कषायपक्तिः कर्माणि, ज्ञानं तु परमा गतिः'। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत इत्यादि-नान्तःकरणशुद्धिसाधनत्वमात्रावगमाच्च न कर्माणि मोक्षसाधनानि, न च कर्मणेत्यादिनिषेधः, केवलकर्मविषयो न समुच्चितविषय इति वाच्यम्, समुच्चये प्रमाणाभावात्। यत् पुनरुक्तं 'विद्यां चाविद्यां च' इति तन्न युक्तम्, तत्रैव 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतम्' इति विद्याकर्मणोः फलभेदश्रवणादुभाभ्यामेव पक्षाभ्यां यथा**

खे पक्षिणां गतिः तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिरिति स्मृतेश्चेति। तस्मात् कर्माण्यन्तःकरणशुद्धिसाधनान्येव। मोक्षो ज्ञानादेवेत्यधिकमाकरे।।

इति ज्ञानकर्मसमुच्चयनिराकरणम्।।४२।।

## अथ ज्ञानाधिकारनिरूपणम्

परित्याज्यार्थादेरभिलषितमेके मुनिवरा
निरस्ताविद्यत्वान्मदमदनमोहादिविमुखाः ।
परं यं [66]संपश्यत्यविरतमखण्डं सुखघनं
तदेव त्वं गङ्गे भवसि [67]परमानन्दलहरि।।४३।।

**पदच्छेदः** – परित्यज्य अर्थादेः अभि-लषितम् एके मुनि-वराः, निरस्त-अविद्यत्वाद् मद-मदन-मोहादि-विमुखाः। परम् यम् सम्-पश्यति अविरतम् अखण्डम् सुख-घनम्, तद् एव त्वम् गङ्गे भवसि परम-आनन्द-लहरि।।

**अन्वयः**– *भो परमानन्दलहरि गङ्गे! एके मुनिवराः निरस्ताविद्यत्वाद् मदमदनमोहादिविमुखाः अर्थादेरभिलषितं परित्यज्य यं परम् अखण्डं सुखघनं सम्पश्यन्ति त्वं तदेव भवसि।*

**भावार्थ** – हे परमानन्दलहरी गङ्गे! श्रेष्ठ मुनिवर अविद्या के निरस्त होने कारण मद, काम आदि से रहित होकर अर्थादि की इच्छा का परित्याग करके जिस अखण्ड सुखरूप को निरन्तर देखते हैं, वह परमानन्दस्वरूपिणी तुम ही हो।

**ग.ल.व्याख्या**- परित्यज्येति। भो परमानन्दलहरि गङ्गे! एके मुनिवरा निरस्ताविद्यत्वान्मदमदनमोहादिरहिताः अतो मुख्या मननशीलाः अर्थादेरभिलषितम् अभिलाषं परित्यज्य यं परम् अखण्डं सुखघनं पश्यन्ति तदेव त्वमित्यन्वयः।

अयं भावः- यद्यप्येकाध्ययनविधिप्रयुक्तत्वात् सकलवेदाध्ययनस्य, सकलवेदार्थविचारोऽप्येकाधिकारो युक्तः, अध्ययनविधेश्चार्थबोधपर्यवसायित्वात्, अर्थावबोधस्य विचारमन्तरेणानुपपद्यमानत्वात्। न चाध्ययनविधेरक्षरग्रहणमात्रपर्यवसानमवकल्प्यते अपुरुषार्थत्वात् तस्य, किञ्चाध्ययनविधिर्यद्यक्षरग्रहणमात्रे पर्यवस्येत् तदार्थविचारस्य प्रयोजकाभावान्मीमांसाद्वयमनारभ्यं स्यात्। तस्मादर्थविबोधपर्यन्तोऽध्ययनविधिविचारमन्तरेणानुपपद्यमानोऽध्ययनाधिकारिणां प्रति सकलवेदार्थविचारं प्रयङ्क्त इति कर्मज्ञानकाण्डद्वयमेकाधिकारमिति वक्तुं शक्यम्, तथापि नैकाध्ययनविधिप्रयुक्तत्वाद् विचारस्यैकाधिकारत्वम्, अध्ययनविधेरक्षरग्रहणमात्रफलत्वादर्थविचारस्याध्ययनविधिप्रयोज्यत्वाभावात् कर्मविचारो ह्यग्निहोत्रादिविधिप्रयोज्यो ज्ञानविचारस्तु श्रवणादिविधिप्रयोज्य एव। न चाक्षरग्रहणं निष्प्रयोजनं फलवदर्थावबोधहेतुत्वात्, न च तर्हि अर्थावबोध एव फलमस्तु, विधिस्वीकृताक्षरग्रहणफलत्वेन विधिफलत्वायोगात्। अन्यथा स्वर्गस्यैव पुरुषार्थतया फलत्वकल्पनौचित्यात्। तस्मान्नैकाधिकारं तदुभयकाण्डं, किं तु कर्मणि विषयदोषादर्शी ज्ञानेच्छु विरक्तः संन्यासस्यैवाधिकारीत्यधिकमाकरे।

इति ज्ञानाधिकारनिरूपणम्।।४३।।

## अथ ज्ञानविधिनिराकरणम्

विधिं दृष्ट्वा नानाविधफलकनिष्ठं स्फुटतरं
विधेयं ते बोधं ह्यभिदधति चाज्ञानशरणाः।
न च श्रौती बुद्धिस्तव विधिविधेयेति निपुणा
वदन्ति त्वं यस्मादमृतपददा दृष्टिवलतः।।४४।।

**पदच्छेदः** – विधिम् दृष्ट्वा नाना-विध-फलक-निष्ठम् स्फुटतरम्, विधेयम् ते बोधम् हि अभि-दधति च अज्ञान-शरणाः। न च श्रौती बुद्धिः तव विधि-विधेया इति निपुणाः, वदन्ति त्वम् यस्माद् अमृत-पद-दा दृष्टि-वलतः।।

**अन्वयः**- *भो गङ्गे! नानाविधफलकनिष्ठं विधिं स्फुटतरं दृष्ट्वा अज्ञानशरणाः ते बोधं विधेयम् अभिदधति। न च तव श्रौती बुद्धिः विधिविधेया इति निपुणा वदन्ति। यस्मात् दृष्टिवलतः त्वम् अमृतपददा।*

**भावार्थ** – हे गङ्गे! विभिन्न वैदिकविधिवाक्यों जैसे – 'आत्मेत्येवोपासीत', 'विज्ञाय प्रज्ञां कुर्वीत', 'आत्मानमुपासीत' इत्यादि के स्पष्ट पर्यालोचन से अज्ञानीजन ब्रह्मज्ञान को विधि-विधेय मानते हैं। किन्तु निपुण जन ब्रह्मज्ञान को विधि से विधेय नहीं मानते हैं। इसलिए तुम दृष्टिमात्र से ही मोक्षरूपी अमृतपद प्रदान करती हो।

**ग.ल.व्याख्या**- विधिमिति। भो गङ्गे! नानाविधं फलं यस्य तन्नानाविधफलकं यज्ञादि तन्निष्ठं तद्विषयं विधिं दृष्ट्वा ते बोधं विधेयं विधिविषयं वदन्ति। के ( ते )ऽज्ञानशरणाः विधिविषयानभिज्ञाः। न च तव श्रौतं ज्ञानं विधिविषयम्। यस्मात् दृष्टिबलतः विधिव्यापारं विना ज्ञानमात्रा त्वं मोक्षदेत्यन्वयः।

अयं भावः–यद्यपि 'आत्मेत्येवोपासीत', 'विज्ञाय प्रज्ञां कुर्वीत', आत्मानमुपासीत' इत्यात्मज्ञाने विधिसम्बन्धोपलब्धेर्विधिपर्यालोचनेन शमादिसाधनसम्पन्नो भूत्वा मोक्षकामो वेदान्तशब्दैरात्मज्ञानं कुर्यादिति वाक्यार्थावगमाद् ब्रह्मज्ञानं विधेयम्। इत्थं च मोक्षो विधीयमानज्ञानादेवेति वक्तुं शक्यम्, तथापि ज्ञानं न विधेयम्, तत्र विधेरशक्यत्वात् आनर्थक्याच्च। तथाहि ज्ञानविषयेऽवगतेऽनवगते वा ज्ञानविधिरभ्युपगम्यते? न तावदवगते, विधेः प्रागेव ज्ञानस्य सिद्धत्वात्। नाप्यनवगते, विषयानवगमे

**तद्विषयज्ञानस्याप्यनवगमात्, विषयाधीननिरूपणत्वाच्च ज्ञानस्य। न च परोक्षरूपेणावगते विषयेऽपरोक्षज्ञानं विधीयत इति वाच्यम्, अपरोक्षज्ञानहेत्वनिरूपणात् ब्रह्मणो मानान्तरायोग्यत्वात्, शब्दस्य तु परोक्षज्ञानमात्रसामर्थ्यात्। यदि शब्दादेव प्रथमतः परोक्षं श्रवणादिसहकारेण पश्चाद-परोक्षमित्युच्यते तर्हि श्रवणादिक एव विधिरङ्गीक्रियताम्, किं ज्ञाने तत्कल्पनेन, न च नियोगमन्तरेण वैदिकसाध्यसाधनभावस्यासम्भवान्नियोगस्यैव वेदार्थत्वाद् विधिरिति शङ्क्यम्, नियोगानिर्वचनेन तस्याप्यनभ्युपगमादि-त्यधिकमाकरे।।**

**इति ज्ञानविधिनिराकरणम्।।४४।।**

## अथ श्रवणादिसाधननिरूपणम्

**विभूतिस्ते जीवा जगदिदमशेषं च जगती-**
**पतिश्चैवं नित्यं विषयविमुखाः शान्तमनसः।**
**चिदानन्दां श्रुत्वा श्रुतिवचनजातैश्च सुनयै-**
**स्तथा मत्वा ध्यात्वाऽमृतपदजुषो जह्नुतनये।।४५।।**

**पदच्छेदः** - विभूतिः ते जीवाः जगद् इदम् अशेषं च जगती-पतिः च एवम् नित्यम् विषय-विमुखाः शान्त-मनसः। चिद्-आनन्दाम् श्रुत्वा श्रुति-वचन-जातैः च सु-नयैः, तथा मत्वा ध्यात्वा अमृत-पद-जुषः जह्नु-तनये।।

**अन्वयः**- *भो जह्नुतनये! शान्तमनसः नित्यं विषयविमुखाः इदम् अशेषं जगत् जगतीपतिः च ते विभूतिः एवं श्रुतिवचनजातैः श्रुत्वा सुनयैः तथा मत्वा चिदानन्दं ध्यात्वा अमृतपदजुषो (भवन्ति)।*

भावार्थ – हे जह्नुतनये ! शान्तमनोभाव वाले, सदा विषय से विमुख लोग इस सम्पूर्ण जगत् तथा इस जगत् के स्वामी ईश्वर को तुम्हारी विभूति के रूप में श्रुतिवचनों से सुनकर सद् युक्तियों से वैसा ही मनन कर तथा चिदानन्द का ध्यान करके अमृत पद के भागी बनते हैं।

ग.ल.व्याख्या- भो जह्नुतनये शान्तमनसो नित्यं विषय-विमुखाः श्रवणाधिकारिणो जीवाः इदमशेषं जगत् जगत्पतिरीश्वरश्च ते तव विभूतिः एवं श्रुतिवचनैः श्रुत्वा सत्तर्कैर्मत्वा चिदानन्दं ध्यात्वा बुद्ध्वाऽमृतजुषो भवन्तीत्यन्वयः।

अयं भावः-यदपि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुत्या श्रवणादीनां त्रयाणामपि ज्ञानसाधन-त्वमवगम्यते। तत्र श्रवणं शब्दशक्तितात्पर्यविचारः, मननं युक्त्या सम्भाविततत्त्वानुसन्धानम्, निदिध्यासनमेकतारत्वम्। तेषु निदिध्यासनं प्रधानम्। तथा सति श्रवणमननयोस्तत्स्वरूपोपकारद्वाराऽदृष्ट-द्वारेणाङ्गत्वमुपपद्यते। श्रवणप्राधान्ये तु मनननिदिध्यासनयोः श्रवणपराधीनतया स्वरूपोपकारासम्भवाददृष्टद्वारेणाङ्गत्वमभ्युपेयम्, तच्चायुक्तम्, दृष्टद्वारेण सम्बन्धे सम्भवत्यदृष्टद्वारकत्वस्यान्यायत्वा-दिति वक्तुं शक्यम्, तथापि 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'वेदान्त-विज्ञानसुनिश्चितार्थाः' इति श्रुत्या शब्दस्यैवापरोक्षार्थधीहेतुत्वा-वगमात्। तद्विशेषणतया श्रवणस्यापि शब्दप्रमाण एवान्तर्भावेन तथात्वाच्छ्रवणमेव प्रधानम्, मनननिदिध्यासने तु तस्यैव फल-प्रतिबन्धविगमलक्षणदृष्टद्वारेणाङ्गतामश्नुवातेन हि प्रतिबन्ध-विगममन्तरेणानुभवपर्यन्तज्ञानहेतुत्वं सम्भवति। तस्माद् दृष्टद्वारेणैवोपकारकत्वान्नादृष्टद्वारकल्पनाप्रसङ्गगन्धोऽपीत्यधिकम-न्यत्र। वस्तुतस्तु त्रयाणामपि श्रवणादीनां शब्दप्रमाणं प्रति

क्रमेणाप्रामाण्यशङ्कासम्भावनाविपरीतभावनालक्षणप्रतिबन्ध-निवृत्तिहेतुत्वाविशेषाद् आग्नेयादिवत्तुल्यसाधनत्वमेव।।

इति श्रवणादिसाधननिरूपणम्।।४५।।

## अथ जीवन्मुक्तिनिरूपणप्रकरणम्

प्रवृत्तिं रुध्वासोः सकलमपि बाह्यं सुखमदो
विहाय श्रुत्यन्तोदितवचनतो ब्रह्म परमम्।
चिदानन्दं ज्ञात्वाऽद्वयमहमुपाश्रित्य चरणौ
त्वदीयौ श्रीगङ्गेऽभवमहह जीवन्नमृतभाक्।।४६।।

**पदच्छेदः** - प्रवृत्तिम् रुध्वा असोः सकलम् अपि बाह्यम् सुखम् अदः, विहाय श्रुति-अन्त-उदित-वचनतः ब्रह्म-परमम्। चिद्-आनन्दम् ज्ञात्वा अद्वयम् अहम् उपाश्रित्य चरणौ, त्वदीयौ श्री-गङ्गे अभवम् अहह जीवन् अमृत-भाक्।।

**अन्वयः**- *भो गङ्गे! असोः प्रवृत्तिं रुद्ध्वा अदः सकलम् अपि बाह्यं सुखं विहाय त्वदीयचरणौ उपाश्रित्य श्रुत्यन्तोदितवचनतः चिदानन्दम् अद्वयं ब्रह्म परमं ज्ञात्वा अहह अहं जीवन् अमृतभाक् अभवम्।*

**भावार्थ** – हे गङ्गे! प्राणों की प्रवृत्ति को अवरुद्ध करके सभी बाह्य सुखों को छोड़कर तुम्हारे चरणों की उपासना करके वेदान्त में कहे वचनों से चिदानन्दरूप अद्वय ब्रह्म को जानकर अहो मैं जीते हुए ही मोक्ष लाभ करने वाला हो गया।

**ग.ल.व्याख्या**- प्रवृत्तिमिति। भो श्रीगङ्गे असोः प्राणस्य प्रवृत्तिं रुद्ध्वा अदः सकलमपि बाह्यं सुखं विहाय त्वदीयचरणौ उपाश्रित्य वेदान्तोदितवचनतः परमद्वयं चिदानन्दं ब्रह्म ज्ञात्वाऽहह इत्याश्चर्ये जीवन्नमृतभागहमभवमित्यन्वयः।

अयं भावः—यद्यपि जीवन्नमृतभागित्यसङ्गतम्। तथा हि जीवनं नाम जागरिताद्यवस्थात्रयावच्छेदः। मुक्तिः पुनरवस्थात्रय-तत्कारणानवच्छेदे सति नित्यनिरतिशयानन्दब्रह्माविर्भावः। एवं च स सति विप्रतिषिद्धमेतज्जीवतो मुक्तिरिति। किं चाज्ञाननिवृत्तौ देहेन्द्रियादिकमपि निवर्तेत। कारणनाशे कार्यनाशावश्यम्भावात्। अज्ञानानिवृत्तौ तु मुक्तिरिति वदतो व्याघातस्तस्मादयुक्ता जीवन्मुक्तिरिति वक्तुं शक्यम्, तथापि 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिन' इत्यादिभगवद्वाक्यैः साक्षात्कृतब्रह्मभावस्यैव विद्यागुरुत्वकथनात् तदन्यथानुपपत्या जीवतो मुक्तिरवश्यमेष्टव्या, प्रमाणजनितसाक्षात्कारवत्यज्ञानावस्थित्ययोगात्। अज्ञाने नष्टे च तत्कार्यभूतोऽयं कार्यकारणसङ्घातोऽपि नष्ट एव भवति। स च नष्टोऽपि दग्धपट इव किञ्चित्कालमवभासते। अवभासमानोऽपि दग्धत्वेनैवावभासते, न सत्वेन, अतोऽविद्यातत्कार्यदाहात् तन्निमित्तजागरिताद्यवस्थासम्बन्धोऽपि विदुषो न भवति। तस्मात् सिद्धैव जीवन्मुक्तिरित्यधिकमन्यत्र।।

इति जीवन्मुक्तिनिरूपणप्रकरणम्।।४६।।

## अथ विदेहमुक्तिनिरूपणम्

परं सत्यं ज्ञात्वा सुखघनमनन्तं श्रुतिगिरा
परप्रेमस्थानं सरसऽमहिमानं सुरधुनि।
त्वदीयैः कारुण्यामृतरसकटाक्षैरधिकृतः
कृती देहं त्यक्त्वाऽपर इह भविष्याम्यमृतभाक्।।४७।।

पदच्छेदः - परम् सत्यम् ज्ञात्वा सुख-घनम् अनन्तम् श्रुति-गिरा, पर-प्रेम-स्थानम् सरस-महिमानम् सुरधुनि। त्वदीयैः कारुण्य-

अमृत-रस-कटाक्षैः अधिकृतः, कृती देहम् त्यक्त्वा अपरः इह भविष्यामि अमृत-भाक्।।

**अन्वयः-** *भो सुरधुनि! त्वदीयैः कारुण्यामृतरसकटाक्षैः अधिकृतः अहं कृती श्रुतिगिरा परं सत्यं परप्रेमस्थानं सरसमहिमानं सुखघनम् अनन्तं ज्ञात्वा देहं त्यक्त्वा अपरः सन् इह अमृतभाक् भविष्यामि।*

**भावार्थ –** हे सुरनदि! तुम्हारे कारुण्यरूपी अमृतकटाक्षों से अधिकृत होकर कृतकृत्य हुआ मैं श्रुतिवचनों से परम सत्यरूपी अनन्त सुखस्वरूप को जानकर, देह को छोड़कर उस ब्रह्म से अभिन्न होकर अमरत्व को प्राप्त करने वाला हो जाऊँगा।

**ग.ल.व्याख्या-** परमिति। भो सुरधुनि! त्वत्कारुण्यामृतरस-कटाक्षैः अधिकृतोऽहं कृती श्रुतिगिरा परं सत्यं सुखघनं ज्ञात्वा देहं त्यक्त्वाऽपरः सन्निहामृतभाक् भविष्यामीत्यन्वयः।

अयं भावः-यद्यपि स्वरूपसम्बन्धविशेषरूपाया ब्रह्मावाप्तेः स्वतः सिद्धतया फलत्वानुपपत्तेरविद्यानिवृत्तेस्तु स्वत इष्यमाणत्वा-भावेन पुमर्थत्वाभावादात्यन्तिकी दुःखनिवृत्तिर्नित्यसुखसाक्षात्कारो लोकान्तरस्थब्रह्मावाप्तिर्वा मुक्तिरिति वक्तुं युक्तम्, तथापि दुःखा-भावस्यावेद्यत्वेन पुरुषार्थत्वानुपपत्तेः जनिमत्त्वेनानित्यत्वप्रसक्त्या नित्यसुखसाक्षात्कारस्यापि पुरुषार्थत्वानुपपत्तेः अन्यस्यान्यात्म-त्वायोगेन सम्बन्धानिर्वचनेन च देशान्तरस्थितब्रह्मावाप्तेरप्य-पुरुषार्थत्वात् तत्त्वमस्यादिवाक्यजनितापरोक्षब्रह्मज्ञानेऽनाद्यविद्या-पटलसमुत्पाटेन नित्यनिरतिशयानन्दप्रत्यगद्वितीयपरमात्म-चैतन्यात्मनावस्थानमेवापवर्ग इति। न चात्र मानाभावः, 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते। ब्रह्मैव समवलीयन्ते', 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुतेरेव मानत्वात्।।

इति विदेहमुक्तिप्रकरणम्।।४७।।

## अथ अहंग्रहोपासनाफलनिरूपणम्

**अहं-बुद्ध्योपास्त्या दहरमुखवर्गस्य सुलभो**
**भवेद् ब्राह्मो लोको रहितजनशोकः सुरधुनि।**
**त्वमेवैतद्रूपा भवसि करुणापारजलधि-**
**स्त्वदीया सेवा नस्त्रिदशगुरुलोकं वितरति।।४८।।**

**पदच्छेदः** - 'अहं-बुद्ध्या' उपास्त्या दहर-मुख-वर्गस्य सुलभः, भवेद् ब्राह्मः लोकः रहित-जन-शोकः सुरधुनि। त्वम् एव एतद्-रूपा भवसि करुणा-अपार-जलधिः, त्वदीया सेवा नः त्रिदशगुरुलोकम् वितरति।।

**अन्वयः**:- *भो सुरधुनि! दहरादिमुखवर्गस्य अहंबुद्ध्या उपास्त्या रहितजनशोको ब्राह्मो लोकः सुलभो भवेत्। करुणापारजलधिः एतद्-रूपा त्वमेव भवसि। अतः त्वदीया सेवा नः त्रिदशगुरुलोकं वितरति।*

**भावार्थ** – हे सुरनदि! दहरादिवर्ग की अहं बुद्धि से उपासना के द्वारा कार्यब्रह्मलोक सुलभ हो सकता है। करुणापारजलधि तुम ही उपास्तिरूपा हो। अतः तुम्हारी सेवा ब्रह्मलोक प्रदान करती है।

**ग.ल.व्याख्या- अहमिति। भो सुरधुनि! दहरादिवर्गस्य अहं-बुद्ध्या उपास्त्या ब्राह्मो लोकः सुलभो भवेत्। एतदुपास्तिरूपा त्वमेव। अतस्त्वदीया सेवा ब्रह्मलोकं वितरतीत्यन्वयः।**

**अयं भावः-यद्यप्यहंग्रहोपासकानां 'स एनान् ब्रह्म गमयतीति' श्रूयमाणमुत्तरमार्गप्राप्य वस्तु परमेव ब्रह्म भवितुं युक्तम्, ब्रह्मशब्दस्य तत्र मुख्यत्वात्, 'तयोर्ध्वमायन्नमृतत्वमेति' इत्यमृतत्वकथनाच्च, तथापि सत्यलोकाख्यं कार्यमेव, ब्रह्मोपासकव्यतिरिक्तत्वात्, परिच्छिन्नत्वाच्च गतिपूर्वकं प्राप्तेर्योग्यम्, न तु तथा परब्रह्मण-स्तल्लोकवासिनां तत्त्वज्ञानेऽवश्यंभाविनि सति पुनर्जन्मव्यवधान-**

मन्त्तरेण मोक्ष्यमाणत्वात्। अत एव स्मृतिरपि

'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे।
परस्यान्तः कृतात्मानः प्रविशन्ति परं पदम्' इति।

इत्थञ्च सत्यमृतत्वश्रुतिः क्रममुक्त्यभिप्राया तस्मादुत्तरमार्गेण प्राप्यं कार्यमेव ब्रह्मेति सिद्धम्।।

इत्यहंग्रहोपासनाफलनिरूपणप्रकरणम्।।४८।।

## अथ प्रतीकोपासनाफलनिरूपणम्

अनात्मन्याख्याताऽमरधिषणयोपास्तिरपि या
तया पुण्यं तस्मात् फलमपि भवस्यम्ब भवती।
अतोऽहं त्वत्पादाश्रयणमधिकं जह्नुतनये
*सदा मन्ये नान्ये किल फलविशेषाय विभवः"।।४९।।

**पदच्छेदः** – अनात्मनि आख्याता अमर-धिषणया उपास्तिः अपि या, तया पुण्यम् तस्मात् सुफलम् अपि भवसि अम्ब भवती। अतः अहम् त्वत्-पाद-आश्रयणम् अधिकं जह्नु-तनये, सदा मन्ये नान्ये किल फलविशेषाय विभवः।।

**अन्वयः**– *भो जह्नुतनये! अनात्मनि अमरधिषणया या उपास्तिः आख्याता तया (यत्) पुण्यं तस्मात् (यत्) फलमपि (तत्) अत्रभवती (त्वं) भवसि। अम्ब! अतोऽहं सदा त्वत्पादाश्रयणमधिकं मन्ये (यतः) अन्ये फलविशेषाय विभवः न किल।*

**भावार्थ** – हे जह्नुतनये! 'नाम ब्रह्म उपास्व' इत्यादि वचनों से नामादि में ब्रह्मबुद्धि से जो उपासना कही गयी है तथा शालग्रामादि में भी जो विष्णुबुद्धि कही गयी है, उसके करने से जो पुण्य होता है, वह पुण्य भी तुम ही हो तथा उस पुण्य

से जो फल कहा गया है, वह फल भी तुम ही हो। इसलिए मैं तुम्हारे चरणों का आश्रय लेना ही पर्याप्त मानता हूँ, क्योंकि अन्य उपाय (यज्ञादि), फलविशेष प्रदान करने में समर्थ नहीं हैं।

ग.ल.व्याख्या- अनात्मनीति। भो जह्नुतनये! अनात्मनि नामादौ अमरधिषणया ब्रह्मबुद्ध्या उपास्तिराख्याता। 'नामब्रह्मेत्युपास्व' इत्यादिना, एवं शालग्रामादावपि विष्णुबुद्ध्या' अनया यत्पुण्यं तस्मात् यत् फलं च तद्रूपा त्वमेव। अतोऽहं त्वत्पादाश्रयणमेवाधिकं मन्ये। यतोऽन्ये यज्ञादयः फलविशेषाय विभवः समर्था न भवन्तीत्यन्वयः।

अयं भावः-यद्यपि प्रतीकोपासनस्य न पुण्यमात्रं फलम्, किन्तु 'स एनान् ब्रह्म गमयति' इति श्रुतौ स अमानवः पुरुष एतान् उपासकान् ब्रह्म सत्यलोकं गमयति प्रापयतीत्यविशेषेण ब्रह्मोपासकवत् प्रतीकोपासनायामप्यमानवपुरुषेण ब्रह्मलोक-नयनश्रवणाद् ब्रह्मलोकावाप्तिरपीति वक्तुं शक्यम्, तथापि प्रतीकोपासकानां न सा वक्तुं शक्या 'त ( ? ) यथायथोपासते तदेव ते भवन्ति' इति श्रुतौ ब्रह्मभावनारूपक्रतोरेव ब्रह्मलोक-प्राप्तिहेतुत्वावगमात् न हि प्रतीकोपासकानां ब्रह्मक्रतुरस्ति येनैते ब्रह्म गच्छेयुः, किन्तु तेषां यथा प्रतीकमर्वाचीनानि फलानि यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवतीत्याद्युक्तान्येव पञ्चाग्निविदां वु( ? )वचनबलादेवेत्यधिकमाकरे।।

इति प्रतीकोपासनाफलनिरूपणम्।।४९।।

## अथ भक्तित एव फलनिरूपणम्

**सतां सङ्गः श्रद्धा विषयविरतिः सच्छ्रुतिमुखं**
**परानन्दास्वादः प्रतिपदमथो तत्स्थितिरपि।**
**तवैतत् संसाध्या चरमजनने जह्नुतनये**
**भवेद् भक्तिर्मुक्तौ करणमिह नान्यत् कथमपि।।५०।।**

**पदच्छेदः** - सताम् सङ्गः श्रद्धा विषय-विरतिः सत्-श्रुति-मुखम्, पर-आनन्द-आस्वादः प्रतिपदम् अथो तत्-स्थितिः अपि। तव एतत् संसाध्या चरम-जनने जह्नु-तनये, भवेद् भक्तिः मुक्तौ करणम् इह न अन्यत् कथम् अपि।।

**अन्वयः** - *सतां सङ्गः, श्रद्धा, विषयविरतिः, सच्छ्रुतिमुखं, परानन्दास्वादः, प्रतिपदमथो तत्स्थितिरपि। जह्नुतनये! चरमजनने, एतत् संसाध्या तव भक्तिः इह मुक्तौ करणम्, अन्यत् कथमपि न।*

**भावार्थ** – हे जह्नुतनये! सज्जनों की सङ्गति, श्रद्धा, विषयों से वैराग्य, सत्-श्रुति-वाक्यों से श्रवण, मनन एवं निदिध्यासन एवं प्रतिपल परम आनन्द का आस्वादन करते हुए परम प्रेम से उसमें निष्ठा होना, इन सबसे साध्य तुम्हारी भक्ति, अन्तिम जन्म प्राप्त करने वाले पुरुष में मुक्ति का कारण बनती है, अन्य कुछ नहीं।

**ग.ल.व्याख्या- सतामिति। भो जह्नुतनये! सतां सङ्गः श्रद्धा विषयवैराग्यं सच्छ्रुतिमुखं श्रवणमनननिदिध्यासनज्ञानानि प्रतिपदं परानन्दास्वादः प्रेमविवृद्ध्या तत्स्थितिरपि तन्निष्ठापि चरमजनने पुरुषे एतत्संसाध्या प्रेमपरा काचिद्विलक्षणा तव भक्तिर्मुक्तौ करणमित्यन्वयः।**

**अयं भावः-यद्यपि विरोधिविषयतया स्वज्ञानस्यैव स्वाविद्योच्छेदक्षमत्वाद्, रागस्य चातथात्वेन निष्फलत्वाद्' भक्तेश्च**

रागरूपत्वान्नोपादेया भक्तिरिति वक्तुं शक्यम्, तथापि 'यमेवैष वृणुते तेन लभ्यः', 'तस्यैष आत्मा विवृणुते तनू स्वां', 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यादिश्रुत्या 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इत्यादिभगवद्वाक्यैश्च भक्तेरमृतफलत्वकथनाद् विरोधिविषयतया स्वाविद्योच्छेदाक्षमत्वेऽपि मणिमन्त्रादिन्यायेन तदुच्छेदकत्वसम्भवात्। ब्रह्मावाप्तिरूपसुखाविर्भावे च तस्या एव हेतुत्वादुपादेयैव भक्तिः, परन्तु प्रथमं महतां सेवा, तद्दयापात्रता, ततः श्रद्धा, तथैषा धर्मेषु, ततो हरिगुणश्रुतिः, ततो रत्यङ्कुरोत्पत्तिस्वरूपाधिगमस्ततः प्रेमवृद्धिः, परानन्दे तस्याथ स्फुरणम्, ततः भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता, ततः प्रेम्णः पराकाष्ठेत्येवं भक्तिगभूमितः व्राता कैवल्यहेतु किं वा पुमर्थामंततर (?) इत्यधिकमस्मत्कृतभगवद्भक्तिचन्द्रिकोल्लासे।।५०।।

इति भक्तित एव फलनिरूपणम्।।५०।।

## अथ कृपात एव फलनिरूपणम्

कृपासिद्धः श्रेष्ठो भवति किल[70] सिद्धेषु करणै-
रहं सर्वैः शून्योऽस्म्यहह इह खलु संसाधनगणैः।
कृपैवैकोद्धारे मम तु करणं ते हि विमृशन्
दृढश्रद्धो[71] गङ्गे चरणमुपयातोऽस्मि शरणम्।।५१।।

**पदच्छेदः** - कृपा-सिद्धः श्रेष्ठः भवति किल सिद्धेषु करणैः, अहम् सर्वैः शून्यः अस्मि अहह इह खलु संसाधन-गणैः। कृपा एव एका उद्धारे मम तु करणम् ते हि विमृशन्, दृढश्रद्धः गङ्गे! चरणम् उपयातः अस्मि शरणम्।।

**अन्वयः-** *भो गङ्गे! करणैः सिद्धेषु कृपासिद्धः श्रेष्ठो भवति किल। अहह अहं सर्वैः संसाधनगणैः शून्यः। हि मम उद्धारे ते कृपैवैका करणं इति विमृशन् दृढश्रद्धः (अहम्) (तव) चरणं शरणम् उपयातः अस्मि।*

**भावार्थ –** हे गङ्गे! विभिन्न साधनों से होने वाले सिद्धों मे कृपासिद्ध श्रेष्ठ होता है। मैं तो सभी साधनों से शून्य हूँ। मेरे उद्धार में तो तुम्हारी एक मात्र कृपा ही साधन है- यह मानकर मैं तुम्हारी चरण शरण में आया हूँ।

**ग.ल.व्याख्या-** कृपासिद्ध इति। भो गङ्गे! करणैः साधनैः जन्मौषधिमन्त्रतपः समाधिभिः सिद्धेषु कृपासिद्ध एव श्रेष्ठः। अहं च सर्वैः साधनैः शून्यः, परन्तु ममोद्धारे तव कृपैवेका कारणमिति विचारयन् दृढश्रद्धस्तवचरणं शरणमुपयातोऽस्मि। तस्मात् त्वयाऽहमनुकम्प्य एवेति भावः।

अयमत्र निष्कर्षः। 'मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' इत्यादिभगवद्वाक्यात्

सुग्रीवो हनुमान् ऋक्षो गजो गृधो वणिक् पथः।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे।।

ते नाधीतश्रुतिगणा नोपासितमहत्तमाः।
अव्रतातप्ततपसो मत्सङ्गान् मामुपागता।।

इत्यादिना सुग्रीवादौ तथोपलम्भाच्च साधनसम्पदभावेऽपि भगवत्प्रसादतो ज्ञानद्वारा कैवल्यं स्यात् ज्ञानं प्रति श्रवणादि-साधनभगवद्भजनभगवत्कृपादीनां विकल्पेन कारणत्वाव-धारणादित्यधिकमस्मत्कृतभगवद्भक्तिचन्द्रिकायाम्।।

इति कृपात एव फलनिरूपणम्।।५१।।

## अथ गङ्गामाहात्म्यम्

**जनानां मोक्षस्ते सुरधुनि कृपातो भवति हि**
**प्रतीतिं प्राप्येमां तव तटनिवासी त्वयि रतः।**
**विमुच्याहं यागादिकमवतपः क्लेशकरणं**
**तथा कृच्छ्रं ज्ञानं जननि भवतीस्तोत्रनिरतः।।५२।।**

**पदच्छेदः** – जनानाम् मोक्षः ते सुरधुनि! कृपातः भवति हि, प्रतीतिम् प्राप्य इमाम् तव तट–निवासी त्वयि रतः। विमुच्य अहम् याग–आदिकम् अवतपः क्लेश–करणम्, तथा कृच्छ्रम् ज्ञानम् जननि! भवती–स्तोत्र–निरतः।।

**अन्वयः**:– *भो सुरधुनि! हि ते कृपातः जनानां मोक्षः भवति। हे जननि इमां प्रतीतिं प्राप्य अहं क्लेशकरणं यागादिकम् अवतपः तथा कृच्छ्रं ज्ञानं विमुच्य भवतीस्तोत्रनिरतः त्वयि रतः तव तटनिवासी (भवामि)।*

**भावार्थ** – हे सुरधुनि! तुम्हारी कृपा से लोगों का मोक्ष होता है इस बात को जानकर ही तुम्हारे तट में रहने वाले लोग तुम्हारी भक्ति में रत हैं। हे माँ! मैं भी इसीलिए क्लेशकारक यज्ञादि तप को तथा कठिन ज्ञान को छोड़कर आपके स्तोत्र में लगा हूँ।

**ग.ल.व्याख्या– जनानामिति। भो सुरधुनि! जनानां तव कृपातो मोक्षो भवतीमां प्रतीतिं प्राप्याहं क्लेशकरणं यागादि तपश्च तथा कष्टसाध्यं ज्ञानं च विमुच्य भवतीस्तोत्रनिरतस्त्वत्तटनिवासी भवामीत्यन्वयः।**

**गङ्गां संवक्ति संस्तौति स्नाति भक्त्या पिबेज्जलम्।**
**असङ्गानममलं योगं मोक्षं च विन्दति।।**
**स नातिकीर्तिता पापं दृष्ट्वा भद्रं प्रयच्छति।**
**अवगाहा च पीता च पुनात्यासप्तमं कुलम्।।**

यत्र गङ्गामहाराजसदेशस्तत्तपोवनं।
सिद्धक्षेत्रं च तद्गेयं गङ्गातीरसमाश्रितम्।।
तत्र त्यजति यः प्राणान् ब्रह्मलोके महीयते।
गङ्गामेव निषेवेत प्रयागे तु विशेषतः।।
नान्यत् कलयुगोद्भूतं मलं हन्तुं सुदुष्कृतम्।

इत्यादिवचनैर्गङ्गासेविनां सति पापेऽपि कृतार्थताश्रवणात् पुरुषार्थिभिर्गङ्गैव सेव्येति भावः।।

इति गङ्गामाहात्म्यम्।।५२।।

## गङ्गालहरीमाहात्म्यम्

**श्रीमच्छङ्करभाष्यसिन्धुमिलिता गङ्गास्तवाख्या शुचिः**
**सेयं सल्लहरी तदीयमननस्नानादिभाजो नराः।**
**सच्चिद् ब्रह्म समाप्नुवन्ति नितरां मुक्ता अविद्यादिभिः**
**श्रद्धाभक्तिसमन्विता अविरतं मात्सर्यमानोज्झिताः।।५३।।**

**पदच्छेदः** - श्रीमत्-शङ्कर-भाष्य-सिन्धु-मिलिता गङ्गा-स्तव-आख्या शुचिः, सा इयम् सत्-लहरी तदीय-मनन-स्नान-आदि-भाजः नराः। सत्-चिद् ब्रह्म समाप्नुवन्ति नितराम् मुक्ता अविद्या-आदिभिः, श्रद्धा-भक्ति-समन्विता अविरतम् मात्सर्य-मान-उज्झिताः।।

**अन्वयः**- *श्रीमच्छङ्करभाष्यसिन्धुमिलिता गङ्गास्तवाख्या शुचिः इयं सद्-लहरी (वर्तते)। तदीयमननस्नानादिभाजो नरा अविद्यादिभिः नितरां मुक्ता-अविरतं मात्सर्यमानोज्झिताः श्रद्धाभक्तिसमन्विताः सच्चिद् ब्रह्म समाप्नुवन्ति।*

**भावार्थ** – यह गङ्गालहरी श्रीशङ्कराचार्य जी के भाष्यरूपी समुद्र में मिली हुई गङ्गा की स्तुति रूपा पवित्र तरङ्ग है, जिसके मनन करने व जिसमें अवगाहन करने वाले मनुष्य मात्सर्य, मद अविद्या आदि से मुक्त होकर श्रद्धा एवं भक्ति से परिपूर्ण होकर सच्चिद् ब्रह्म को प्राप्त करते हैं।

**ग.ल.व्याख्या- श्रीमच्छङ्करेति। श्रीमच्छङ्करभाष्यसमुद्रमिलिता गङ्गास्तोत्राख्या पवित्रा उत्तमा इयं लहरी तदीयमननस्नानाख्यभाजो नरा अविरतं मात्सर्यमानोज्झिताः श्रद्धाभक्तिसमन्विताः सच्चिद् ब्रह्म समाप्नुवन्तीत्यन्वयः।।५३।।**

## स्वगुरुपरम्परोल्लेखपूर्वकं ग्रन्थस्योपसंहारः

**नत्वा श्रीपुरुषोत्तमाख्यचरणौ दामोदरस्वामिनां**
**तौ गोविन्दकृपानिधेश्च चरणौ श्रीरामपूर्वस्य च।**
**तौ विद्याप्रदवासुदेवयतिनां[72] नारायणास्योद्गता**
**सद्गङ्गालहरी स्वसङ्गवशतोऽपूर्वा तनोत्वत्र शम्।।५४।।**

*इति श्रीनारायणतीर्थकृता गङ्गालहरी समाप्ता।।*

**श्रीरस्तु।।**

**पदच्छेदः** - नत्वा श्रीपुरुषोत्तम-आख्य-चरणौ दामोदर-स्वामिनाम्, तौ गोविन्द-कृपा-निधेः च चरणौ श्रीराम-पूर्वस्य च। तौ विद्या-प्रद-वासुदेव-नारायण-अस्य-उद्गता, सद्-गङ्गा-लहरी स्व-सङ्ग-वशतः अपूर्वा तनोतु अत्र शम्।।

**अन्वयः**- *श्री पुरुषोत्तमाख्यचरणौ दामोदरस्वामिनां श्रीरामपूर्वस्य गोविन्दकृपानिधेः तौ चरणौ नत्वा विद्याप्रदवासुदेवयतीनां तौ नत्वा नारायण-आस्य-उद्गता अपूर्वा सद्गङ्गालहरी स्वसङ्गवशतः अत्र शं तनोतु।*

**भावार्थ** – श्री पुरुषोत्तमनामक गुरु के चरणों, दामोदरस्वामि के चरणों, श्रीरामगोविन्दतीर्थ के चरणों को तथा विद्याप्रदाता गुरु वासुदेवयति जी के चरणों को प्रणाम करके नारायणतीर्थ के मुख से निर्गत यह अपूर्व कृति अपनी सङ्गति के प्रभाव से लोगों का कल्याण करे।

**ग.ल.व्याख्या-** परमेष्ठिगुरुक्रमेण स्वगुरुपरम्परां दर्शयन्नतिततिफलमाह नत्वेति। नारायणतीर्थस्य आस्यात् मुखात् उद्गता अपूर्वा सद्गङ्गास्तुतिरूपा स्वसङ्गवशतः अत्र लोके शं कल्याणं तनोत्वित्यन्वयः।।५४।।

इति
श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीनारायणतीर्थस्वामिरचिता
गङ्गालहरीव्याख्या समाप्ता।।

इति श्रीनारायणतीर्थकृता गङ्गालहरी समाप्ता।।

श्रीसंवत् १८३५ फाल्गुने शुक्ले १३

श्रीरस्तु।।



# मूलश्लोकपाठभेदटिप्पणी

1. क– 'श्रीगुरुगणपतिभ्यो नमः' इति नास्ति
2. ख, ग – 'वेणीमाधवाय नमः' इति नास्ति
3. क, ख – 'गङ्गायै नमः' इति नास्ति
4. क, ख – सुभगे
5. ख – गुणजातैर्विरहिता
6. ग – अशेषाद्यै
7. क – निज
8. ग – त्वर्तेः
9. क – संभान्ती
10. क,ग – ननु तस्यै (जनतायै इत्यस्य स्थाने)
11. क – नप्ता
12. क – छुत्त्या
13. क, ग – पदाप्त्यै
14. क, ख – प्रापयसि च
15. क – जनिकरणगाप्यम्ब
16. ग – भः
17. ग – वर्ष्म मम च
18. क – लहरी
19. क, ख – गावां

20. क - भवति

21. क - कत्वं

22. ख - उपास्ते

23. ख - पर

24. ख - निरतम्

25. क - सुमानन्तर

26. ख - अमृत

27. क - मदपविधि

28. क - यम

29. क - कुतर्कोऽस्यं

30. ख - पराद्वैतां सम्बोधयति जननि त्वं तु गतये

31. क, ख - कृपाकूपारात्मा

32. क, ख - अमृत

33. ग,घ - तत्त्वधिषणा

34. क - विजयते

35. ख - 'यदूचुर्वेदान्ताधिगतमतयस्त्वन्मतिकरम्' इत्यादिः श्लोकः 'श्रुतिर्नित्या..' इति श्लोकात् परं वर्तते

36. ख - सेवायां

37. ख - तीर्थे

38. क - चात्मैकमतिमितरे शून्यविषयां

ख - चात्मैकमतिमपि तां शून्यमितरे

39. क - भांतास्त्वं

ख - भ्रान्ता वस्त्वं

40. ख - ०धिष्ठिपदा

41. ख - सदेव (समृद्धा इत्यस्य स्थाने)
42. विचार्याप्यमथयत् इति मातृकासु पाठः
43. क - क्षेत्रादिक्षैः
44. ख - वचः श्रौतं व्यासोदितमपि इत्यादिश्शलोको नोपलभ्यते
45. क - पुण्यचरिते
46. क - सौभाग्यं सुकृतमुखसौरभ्यमतुलं
47. क - त्वमेदं
48. ख - हस्तलेखे अयं श्लोकः 'वियद्वद् ..' (29) इति श्लोकात् परं वर्तते।
49. क - निवधि
50. ग - अलेप
51. क - ०महहत्
52. क - गङ्गे स्नाने पाने
53. क - मता
54. ख - उदित
55. क,ग - दृष्ट्त्वं
56. क - चिति
57. क - पश्यस्येवे
58. ख, ग - कृति
59. क, ख - त्वं
60. क - सुरनदि
61. क - क्रमश
62. क - हुत
63. ख - आये
64. ग - सुरधुनिः

65. क - शुद्धिकरणः

66. क - संपश्यन्

67. क, ख - भवगानन्दलहरी

68. क - सरसि

69. क - भवेद् भक्तिर्मुक्तौ करणमिह नान्यत् कथमपि

70. ख - खलु

71. ख - दृढश्रद्धा

72. ख - यतीनां, क, ग - यतिनां



## परिशिष्टम् 1

# श्लोकानुक्रमणी प्रतिपाद्यविषयसहिता

| श्लोकः | प्रतिपाद्यो विषयः | श्लोकसंख्या |
|---|---|---|
| अनात्मन्याख्यातामरधिषणयोपास्तिरपि या | प्रतीकोपासनाफलनिरूपणम् | 46 |
| अये शान्ता दान्ता विषयविमुखा द्वेषरहिताः | अज्ञाननिवृत्तिनिरूपणम् | 41 |
| अलेपे यस्मिन् वै निरवधिचिदानन्दविभवे | कर्तृत्वादिबन्धमिथ्यात्वम् | 31 |
| अशेषा वेदान्ता अभिदधति लक्ष्यां भगवतीम् | शब्दप्रवृत्तिनिरूपणम् | 15 |
| अशेषैः पुण्यानां पटलकरणैः शुद्धकरणे | ज्ञानकर्मसमुच्चयनिराकरणम् | 42 |
| अशेषैर्दोषैस्त्वं जननि गुणजातैश्च रहिता | निर्विशेषप्रकरणम् | 2 |
| अहंबुद्ध्योपास्त्या दहरमुखवर्गस्य सुलभः | अहंग्रहोपासनाफलनिरूपणम् | 48 |
| उदाहृत्य प्राहुर्निगमपटवः सोऽयमिति यत् | लौकिकाखण्डवाक्यार्थनिरूपणम् | 13 |
| करोषि त्वं पासि क्रमत उत संहारपदवीम् | ब्रह्माश्रयाज्ञाननिरूपणम् | 40 |
| कृपासिद्धः श्रेष्ठो भवति किल सिद्धेषु करणैः | कृपात एव फलनिरूपणम | 51 |
| कृशानुः सुत्रामा मरुदथ विधुः सूर्य इति च- | मन्त्रार्थवादप्रामाण्यनिरूपणम् | 16 |
| गिरां सत्यज्ञानाद्वयसुखमुखानां भगवती | वैदिकाखण्डवाक्यार्थनिरूपणम् | 14 |
| जगद् दृष्ट्वा मुग्धं सुखितमथदुःखान्वितमदः | प्रधानवादिनिरासप्रकरणम् | 6 |
| जगन्नद्यां कीटा इव जननधारासु पतिताः | सुखस्वरूपताप्रकरणम् | 30 |
| जडत्वं कार्यत्वं परिमितिपथं नात्र भवती- | विज्ञानवादनिरासप्रकरणम् | 39 |
| जनं दीनं दृष्ट्वा श्रुतिवनितयाऽदर्शि कृपया | जीवब्रह्मैकत्वप्रकरणम् | 32 |
| जनानां मोक्षस्ते सुरधुनि कृपातो भवति हि | गङ्गायाः कृपया मोक्षावाप्तिः | 52 |

परिशिष्टम् 2

## श्लोकपादानुक्रमणी

| पादः | श्लोकसंख्या | पादसंख्या |
|---|---|---|
| अखण्डार्थे शुद्धे परतरसुखे जह्नुतनये | 42 | 3 |
| अगम्या विज्ञात्री सुरधुनि सुमानान्तरचयैः | 15 | 2 |
| अतोऽहं त्वत्पादाश्रयणमधिकं जह्नुतनये | 49 | 3 |
| अतस्त्वं नः स्वान्तं स्वपदविषयं वर्ष्म मलिनम् | 10 | 3 |
| अतस्त्वां सर्वज्ञां श्रयति जनता शर्मनिवहाम् | 4 | 3 |
| अधिकारं संवीक्ष्य प्रवदति मखं च व्रतविधिम् | 19 | 2 |
| अनपेक्ष्यैवाशेषस्थितिजननभङ्गैकविभवा | 24 | 2 |
| अनात्मन्याख्याताऽमरधिषणयोपास्तिरपि या | 49 | 1 |
| अन्यथाख्यातिं चात्मैकमतिमपि तां शून्यमितरे | 22 | 2 |
| अमृतं रास्येवैभ्यो विरहितजगत्कार्यविषया | 12 | 4 |
| अये शान्ता दान्ता विषयविमुखा द्वेषरहिताः | 41 | 1 |
| अर्थवादैर्मन्त्रैर्वा वदति भवतीमेव च निगमः | 16 | 2 |
| अलेपे यस्मिन् वै निरवधिचिदानन्दविभवे | 31 | 1 |
| अविशेषाऽसामान्या परममहिमानं गतवती | 2 | 2 |
| अशेषास्त्वय्येवामरधुनि विशेषा अविरतं | 29 | 3 |
| अशेषा वेदान्ता अभिदधति लक्ष्यां भगवतीम् | 15 | 1 |
| अशेषैः पुण्यानां पटलकरणैः शुद्धकरणे | 42 | 1 |
| अशेषैर्दोषैस्त्वं जननि गुणजातैश्च रहिता- | 2 | 1 |
| अहं बुद्ध्योपास्त्या दहरमुखवर्गस्य सुलभः | 48 | 1 |
| अहं सर्वैः शून्योऽस्म्यहह इह खलु संसाधनगणैः | 51 | 2 |

| पादः | श्लोकसंख्या | पादसंख्या |
| --- | --- | --- |
| अहो त्वं त्यक्त्वाणुद्व्यणुकमुखमेतां त्रिजगतीम् | 7 | 3 |
| अहो त्वं विन्यस्ताऽनृततनुविशेषाऽत्र भवती | 15 | 3 |
| अहो त्वं तत्क्लृप्तैः सृजसि गुणजातैर्विरहिता | 6 | 3 |
| उदस्यास्य क्लेशं तनुभृत इहास्यत्रभवती | 13 | 3 |
| उदाहृत्य प्राहुर्निगमपटवः सोऽयमिति यत् | 13 | 1 |
| उपास्तेः श्रौत्या हि श्रुतिगतरवैकाधिगमिता- | 12 | 3 |
| कथञ्चित् सद्बुद्ध्या गुरुकरुणया स्वात्मसुखताम् | 30 | 2 |
| कदाचिन्नैव त्वं श्रयसि खलु सच्चित्सुखघना | 3 | 3 |
| करोषि त्वं पासि क्रमत उत संहारपदवीम् | 40 | 1 |
| करोषि त्वं पासि प्रलयपथमेनां गमयसि | 7 | 4 |
| कुतर्कोत्थं मानं चितिसुखघनां त्वां भगवतीम् | 17 | 2 |
| कृती कश्चिद् भूयः स्थिरतरसुखं चामृतपदम् | 38 | 3 |
| कृती देहं त्यक्त्वाऽपर इह भविष्याम्यमृतभाक् | 47 | 4 |
| कृपैवैकोद्धारे मम तु करणं ते हि विमृशन् | 51 | 3 |
| कृपापारावारा सुरधुनि सुवारात्मकतनुः | 17 | 4 |
| कृपासिद्धः श्रेष्ठो भवति किल सिद्धेषु करणैः | 51 | 1 |
| कृशानुः सुत्रामा मरुदथ विधुः सूर्य इति च | 16 | 1 |
| गिरां सत्यज्ञानाद्वयसुखमुखानां भगवती | 14 | 1 |
| गुरोर्ज्ञाता मर्त्यानमृतपदवीं प्रापयसि च | 40 | 4 |
| पतिश्चैवं नित्यं विषयविमुखाः शान्तमनसः | 45 | 2 |
| चितिं श्रुत्या युक्त्याऽनुभवबलतस्त्वां परतरे | 37 | 3 |
| चिदानन्दा गङ्गे श्रुतिगिरिगता त्वं विजयसे | 22 | 4 |
| चिदानन्दां श्रुत्वा श्रुतिवचनजातैश्च सुनयैः | 45 | 3 |
| चिदात्मानं शश्वत् सुरतटिनि भावेन गदती | 35 | 3 |
| चिदानन्दं ज्ञात्वाऽद्वयमहमुपाश्रित्य चरणौ | 46 | 3 |
| जगद् दृष्ट्वा मुग्धं सुखितमथदुःखान्वितमदः | 6 | 1 |

परिशिष्टम् 3

## श्लोकस्थ-महत्त्वपूर्ण-पदसूची

□□

